॥ श्रीः ॥



हरिदास-संस्कृत-ग्रन्थमाला
१७२



॥ श्रीः ॥

# लघुशब्देन्दुकला

रचयिता
व्याकरण-माहित्याचार्य-वेदान्ततीर्थ-
**पण्डित श्री शोभाकान्त झा**

परिशिष्टसंयोजकः
व्याकरणाचार्य-
**पण्डित श्री रामचन्द्र झा**

सम्पादकः-
व्याकरण-न्यायाचार्य-
**पण्डित श्री शोभित मिश्रः**

**चौखम्बा संस्कृत सीरिज आफिस, बनारस-१**

सं० २०१३ ] ( द्वितीयं संस्करणम् ) [ ई० १९५६




# प्राक्कथनम्

विदितमेव तत्रभवतां श्रीमतां, यत्किल सर्वतः प्रचलितपाणिनिव्याकरणशास्त्रे परिप्रथितयशोराशिधवलिताखण्डभूमण्डलेनाऽनन्यसाधारणपाण्डित्यप्रकर्षवता महामहोपाध्यायेन श्रीमता भट्टनागेशेन विरचितो लघुरपि महतोऽपि लघयन्नन्वर्थनामा 'लघुशब्देन्दुशेखरः' सर्वेष्वपि व्याकरणग्रन्थेषु मूर्धन्यतमो वर्तत इत्यत्र न मनागपि सन्देहलेशोऽपीति । परन्त्वस्य परमकाठिन्यात् परिणतबुद्धीनामपि प्रयासागम्यत्वान्न ततो लघुबुद्धिमतामाधुनिकानां दुरूहार्थप्रतिपत्तिरतः सुहृद्वरपण्डित-श्रीशोभाकान्तझा-व्याकरण–साहित्याचार्य–वेदान्ततीर्थ–लब्धस्वर्णपदकेन 'लघुशब्देन्दुकला' नाम्नी प्रश्नोत्तरी सम्पाद्य सज्जस्कं ।

आशास्महे सर्वसंस्करणशेखरायमाणमिदमभिनवसंस्करणं गुणैकपक्षपातिनां विबुधानां कौतुकाय, परीक्षोत्तितीर्षूणां परमानन्दाय भवितेति निश्चप्रचम् । किमधिकं विज्ञापितेन यदि छात्राः प्रश्नोत्तरीमिमां कण्ठस्थां विदध्युस्तदा नूनमेव प्रथमश्रेण्यामुत्तीर्णा भवेयुरिति ।

पुस्तकस्यास्य प्रकाशकमहोदयस्याग्रहवशंवदेन छात्रहितैषिणा मया च व्याकरणाचार्यपरीक्षोत्तितीर्षूणां सौलभ्याय परिशिष्टे यथामत्युपयुक्तं निबन्धं संयोज्य परिवर्धितः । तत्र यदि भ्रमप्रमादेन काश्चन त्रुटयो भवेयुस्ताः परिमार्जयन्तु दयावन्तो धीमन्त इति साञ्जलिबद्धं सम्प्रार्थयते—

—रामचन्द्र झा

# प्रकरणानुक्रमणिका



❀ श्री जनकनन्दिन्यै नमः ❀

# लघुशब्देन्दुकला



यदीयपदपङ्कजं भुवनभूरिभारं दधत्
स्तुतं विगतकल्मषैर्दिशति मौक्तिकं सत्पथम् ।
तमद्य निरवद्यसद्विमलवेदवेद्यं चिरं
चकास्यमतिरोचिषा सपदि चन्द्रचूडं भजे ॥

## अथ संज्ञाप्रकरणम् ॥ १ ॥

**१ प्रश्न—'अइउण्' इत्यादिप्रत्याहारसूत्रेषु सन्ध्यभावमुपपाद्य 'वर्णात्कार' इति वार्त्तिकार्थम्परिष्कृत्य कारप्रत्ययाभावः समर्थ्यताम् ।**

उ०—ननु 'अइउण्' इत्यादौ गुणादिकं कथं नेति चेन्न, संहिताया अविवक्षया तदप्रवृत्तेः । अथ 'वर्णात्कार' इति वार्त्तिकस्य कोऽर्थः ? यदि वर्णवाचकात्कारप्रत्यय इत्यर्थस्तर्हि विसर्जनीयपदादपि कारप्रत्ययापत्तिः, तस्यापि वर्णवाचकत्वात्, नच यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चारितात्कारप्रत्ययो भवतीत्यर्थे न दोषो विसर्जनीयपदस्य स्वघटकवृत्ति वर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वाभावात् इति वाच्यम्, अनुनासिकपदस्य स्वघटकनकारवृत्त्यनुनासिकत्वरूपवर्णत्वव्याप्यधर्मावच्छिन्नविषयताकबोधतात्पर्येणोच्चरितत्वेन तस्मात्कारप्रत्ययापत्तेः । नच यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिवर्णत्वव्याप्यजात्यवच्छिन्नविषयताकबोधतात्पर्येणोच्चरितात्कारप्रत्ययो भवतीत्यर्थेनानुनासिकत्वस्य गुणतया जातित्वाभावेन न दोष इति वाच्यम्, गुणपदस्य, वर्णसंज्ञापक्षे घिनदीपदयोश्च स्वघटकाकारेकारवृत्तिवर्णत्वव्याप्याऽत्वेत्वादिजात्यवच्छिन्नविषयताकबोधतात्पर्य्येणोच्चरितत्वेन तेभ्यः कारप्रत्ययापत्तेः ।

नच यस्मात्कारप्रत्ययश्चिकीर्षितस्तद्घटकवृत्तिर्या वर्णत्वव्याप्या जातिस्तया साक्षादवच्छिन्ना या मुख्यविशेष्यता तादृशविशेष्यताकबोधतात्पर्येणोच्चरितात्कारप्रत्ययो भवतीति गुणादिपदस्थले बोधीयमुख्यविशेष्यताया अन्यतमत्वादिनैव साक्षादव-

च्छिन्नत्वान्न दोष इति वाच्यम्, ह्रस्वदीर्घपदयोरुच्चारणार्थेकारादिघटित 'कि' 'कु' इत्यादिपदानाञ्च साक्षात्स्वघटकवृत्तिवर्णत्वव्याप्य–ह्रस्वत्व–दीर्घत्व–कत्वादिजात्यवच्छिन्नमुख्यविशेष्यताकबोधतात्पर्येणोच्चरितत्वेन तेभ्यः कारप्रत्ययापत्तेरिति चेन्मैवम्, ह्रकारादिषु पुनः पुनरकारोच्चारणेन व्यञ्जनद्योतकत्वमकार एव स्वीक्रियते नत्विकारादौ। तथाच वर्णात्कार इत्यस्य—

'वर्णविशिष्टात्कारप्रत्यय' इत्यर्थः। वै० स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणघटितत्त्व, स्वनिष्ठवर्णत्वव्याप्यजात्यवच्छिन्नविशेष्यताप्रयोजकतापर्याप्त्यधिकरणेतराऽघटितत्वैतदुभयसम्बन्धेनेति किशब्दादौ द्वितीयसम्बन्धाभावान्नदोषः।

नच 'अइउण्' इत्यादौ 'वर्णात्कार' इति वार्त्तिकेन कारप्रत्ययः स्यादिति वाच्यम्, 'रोगाऽख्यायां ण्वुल्बहुल'मित्यतो बहुलग्रहणानुवृत्त्या तदप्रवृत्तेरिति दिक्।

**२ प्र०—'अइउण्' इत्यादिप्रत्याहारसूत्रेषु सन्ध्यभावप्रतिपादनपरं 'यत्वि' त्यादिनोक्तं मतमुपपाद्य नागेशोक्तदिशा तत्खण्डनीयम्।**

उ०—यत्तु—अच्पदनिष्ठशक्तिज्ञानदशायां पदार्थबोधाभावेन 'आद्गुण' इत्यादीनां वाक्यार्थबोधानिष्पत्त्या तदप्रवृत्तावविकृताकारादिषु गृहीताजादिपदशक्तिरच्प्रत्याहारावगमानन्तरं स्वोपजीव्याविकृतत्वविघातकगुणादिप्रवृत्तिम्प्रति निमित्तं न भवतीति, न प्रवर्त्तते–'अइउण्' इत्यादौ सन्धिरित्युक्तम्, तन्न युक्तिसहम्। 'आदिरन्त्येने'ति सूत्रबोधिता शक्तिः–अकारादिचान्तसमुदायघटकत्वावच्छिन्ने, नत्वविकृततादृशसमुदायघटकत्वावच्छिन्ने, तादृशसमुदायघटकबोध्यत्वावच्छिन्ने वेत्यविकृतत्वमुपजीव्यमेव नास्तीति प्रकृते उपजीव्यविरोधाभावेन सन्निपातपरिभाषाया अप्रवृत्तेरिति दिक्।

**३ प्र०—सप्रयोजनं कैयटमतेन रप्रत्याहारमुपपाद्य विधाय च नागेशोक्तदिशा तत्खण्डनं तृतीयहेतोरव्यापकत्वदर्शनदशायां पक्षसाध्यहेतूनां स्वरूपाणि स्पष्टमुपपादनीयानि। अनुमितौ साध्यस्य व्यापकताया हेतोश्चव्यापकताया आनुगुण्येनात्र भाष्योक्ततृतीयहेतोरव्यापकतापत्तिदोषोद्भावनस्यानौचित्यविरहोऽपि चिन्तनीयः।**

उ०—तुल्यास्येति सूत्रे–ऋलृवर्णयोः सावर्ण्यस्वीकारे 'तवल्कार' इत्यादौ रपरत्वमाशङ्क्य 'उरण्' सूत्रे लपरत्वं वक्ष्यामी'ति भाष्यवार्त्तिककाराभ्यामुक्तम्।

कैयटश्च 'लपरत्वं वक्ष्यामी'त्यस्य रप्रत्याहाररूपेण व्याख्यास्यामीत्यर्थमुक्त्वा

'लण्' सूत्रघटकाकारस्यानुनासिकत्वेनेत्संज्ञां विधाय तेन रप्रत्याहारं साधयामास। तन्न नागेशपादेभ्यो रोचते। तथाहि—

लण्सूत्रस्थाकारस्यानुनासिकतया सिद्धरप्रत्याहारेणैव रेफलकारोभयग्रहणे सिद्धे 'अतोलॅ'ति सूत्रे पाणिनेर्लकारोच्चारणवैयर्थ्यापत्तेः। न च 'अतोलॅति' सूत्रे लकारोच्चारणस्य रप्रत्याहारानित्यत्वज्ञापकतया 'रदाभ्यामि' त्यादौ न रप्रत्याहारग्रहणमिति फलमिति वाच्यम्। एवमपि 'इको यणचि' इत्यादावर्धमात्रालाघवानुरोधेन यप्रत्याहारेणैव व्यवहारसम्भवे तत्र णकारोच्चारणवैयर्थ्यापत्तेः। न च णकारोच्चारणमकारेण सह रप्रत्याहार एव भवतीति ज्ञापनार्थं तेन 'ङेर्यः' 'योऽचि' इत्यादौ न यप्रत्याहार इति फलमिति वाच्यम्। अनुबन्धानामच्प्रत्याहारे ग्रहणाभावे 'आचारादप्रधानत्वाल्लोपश्च बलवत्तर' इति भाष्योक्ततृतीयहेतोरव्यापकत्वापत्तेः।

न च हेतोरव्यापकत्वं गुणः, व्यापकत्वे हि हेतुर्व्यभिचारी स्यादेवञ्चाव्यापकत्वाभिधानस्य दोषत्वकल्पनं न समीचीनमिति वाच्यम्, हेतोरव्यापकतापत्तिरित्यस्य पक्षतावच्छेदकाव्यापकताऽऽपत्तिरित्यर्थात्। तथा च हेतोः पक्षतावच्छेदकाऽव्यापकत्वे भागासिद्धया भाष्यासङ्गतिरित्याशयात्।

अयं भावः—अनुमितिर्द्विधा भवति, पक्षतावच्छेदकावच्छेदेन, पक्षतावच्छेदकसामानाधिकरण्येन च। तत्र पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकसामानाधिकरण्येन 'हेतोरसिद्धत्वे भागासिद्धिदोषो भवति। एतावता पक्षतावच्छेदकावच्छेदेनानुमितिस्वीकारे पक्षतावच्छेदकव्यापकत्वं हेतोरावश्यकम्, तदव्यापकत्वे भागासिद्धयापत्तिरिति' फलितम्। तथा च प्रकृतेऽनुबन्धत्वरूपपक्षतावच्छेदकसामानाधिकरण्येन अर्थात् अनुबन्धत्वसमानाधिकरणतत्तदनुबन्धव्यक्तित्वावच्छेदेनानुमितिस्वीकारे तत्तदनुबन्धत्वरूपपक्षतावच्छेदकभेदेनानुमित्यानन्त्यापत्तिगौरवभिया लाघवात् अनुबन्धत्वावच्छेदेनैवानुमितिस्वीकारस्यावश्यकतया लण्सूत्रघटकाकारस्य रप्रत्याहारसिद्ध्यर्थमित्संज्ञाकल्पनेऽच्प्रत्याहारसिद्धिवेलायाम् 'उपदेशेऽजनुनासिक' इत्यस्याप्रवृत्त्या 'तस्य लोपः' इति लोपशास्त्रीयोद्देश्यतावच्छेदकेत्संज्ञकत्वाक्रान्तत्वरूपहेतोरभावेन इत्संज्ञायोग्यत्वरूपानुबन्धत्वात्मकपक्षतावच्छेदकस्य च तत्रापि सत्वेन लोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपहेतोरनुबन्धत्वरूपपक्षतावच्छेदकव्यापकत्वाभावेनानुबन्धानामजादिप्रत्याहारे ग्रहणाभावहेतुतयोपन्यस्तस्य—'आचारादप्रधानत्वात्, लोपश्च बलवत्तरः' इति बलवत्तरलोपशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वरूपतृतीयहेतोरनुबन्धत्वरूपपक्षतावच्छेदकाश्रयैकदेशभूतलण्सूत्रघटकाकारेऽस-

त्वेनाव्यापकत्वापत्त्या भागासिद्ध्यापत्तिदोषः स्पष्ट एवेति हृदयम् ।

अत्रानुमानश्चेत्थम्—

'अनुबन्धाः प्रत्याहारजन्यबोधविषयत्वाभाववन्तः 'तस्यलोपः' इति शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तत्वात्' । न च 'अइउण्' इत्यादिघटकणकारादिषु अल्प्रत्याहारजन्यबोधविषयत्वस्य हल्प्रत्याहारजन्यबोधविषयत्वस्य च सत्त्वेन प्रकृतसाध्यस्याभावेन प्रकृतहेतोश्च सत्त्वेन प्रकृतहेतुर्व्यभिचारीति न तस्य साध्यसाधकत्वमिति वाच्यम्, स्वेतरो यः स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नस्तदबोधकप्रत्याहारजन्यबोधविषयत्वाभावस्य साध्यत्वेनाऽदोषादिति ।

ननु रप्रत्याहारोऽङ्गीकार्यः, स्वीकार्या च 'लपरत्वं वक्ष्यामी'ति भाष्यानुरोधमनुसन्धायानुबन्धत्वसमानाधिकरणतत्तद्व्यक्तित्वावच्छेदेन गुरुभूताप्यनुमितिः, को नामैवं दोषः सम्भाव्यत इति चेन्न, हल्प्रत्याहारसिद्धिदशायां 'हलन्त्य'मिति सूत्रस्य वाक्यार्थबोधाभावप्रयुक्तात्पदार्थानिष्पत्त्या 'उपदेशेजि'त्यस्य वाक्यार्थबोधाभावेन' लण् सूत्रघटकाकारस्येत्संज्ञालोपाभ्यामपहारविरहेण प्रत्याहारेषु जातिग्रहणपक्षस्यैवाङ्गीकृतत्वेन हल्प्रत्याहारेण 'लण्' घटकाकारस्यापि ग्रहणे हे आन् ! मांत्रायस्वेत्यर्थकं 'मामां त्रायस्वे'त्यत्रानुनासिकपक्षे 'मोऽनुस्वार' इत्यनेनानुस्वारापत्तेः । न च ह्रस्वत्वसमानाधिकरणजातेरेव निर्देशेन न तत्र दोष इति वाच्यम्, एवमपि सोऽस्तीत्यादौ 'एतत्तदो'रिति सूत्रेण सुलोपापत्तेर्दुर्वारत्वात् । लण्सूत्रघटकाकारस्याननुनासिकत्वादेव 'प्रत्याहारेऽनुबन्धानां कथमज्ग्रहणेषु न' इत्यनेनाज्बोधकसूत्रेषु प्रत्याहारार्थं विधीयमानानुबन्धानामज्ग्रहणेन ग्रहणं कुतो नेत्यच्प्रत्याहारे एव भाष्ये विहिता शङ्का सङ्गच्छते । तदनुनासिकत्वे तु अच्प्रत्याहार इव हल्प्रत्याहारेऽपि विजातीयाकारानुबन्धग्रहणप्रसक्तेस्तदसङ्गतमेव स्यादिति दिक् ।

**४ प्र०—'उपदेशे इदन्त्यम्' 'अच्' 'अनुनासिक' इति न्यासेनान्योन्याश्रयपरिहारः कथमिति निगद्य शेखरोक्तदिशा तत्खण्डनं क्रियताम् ।**

उ०—ननु 'उपदेशे इदन्त्यम्' 'अच्' 'अनुनासिक' इति सूत्रत्रयघटकीभूतं प्रथमसूत्रमौपदेशिकान्त्यस्येत्संज्ञार्थम्' द्वितीयं मनिनादावनन्त्यस्येकारादेरित्संज्ञार्थम्, तृतीयन्तु 'रुशब्दे' इत्यादौ तद्वारणायाजित्यनुवृत्तिसामर्थ्येन 'अच्चेदिद्भवति तर्ह्यनुनासिक एवेति नियमार्थम् । 'अनुनासिकश्चेदिद्भवति तर्ह्यजेवेति' नियमवैपरीत्यं समुत्प्रेक्ष्य तत्प्रवृत्तौ दोषोद्भटमसहक्तं तृतीयसूत्रसार्थक्यन्तु न

शङ्कनीयम्, नुमादावित्वाप्राप्त्या 'मिदचोऽन्त्यादि'ति वैयर्थ्यप्रसक्तेः। न चैवमपि 'अनन्तरस्ये'ति न्यायेनाव्यवहितस्य 'अच्' इत्यस्यैव तेन नियमस्वीकारात् प्रथमसूत्रेण पुनरपि रुप्रभृतौ दोष एवेति वाच्यम्, एकयोगेन विधिनैव सकलेष्टसिद्धौ योगविभागसामर्थ्येन 'अनन्तरस्ये'ति न्यायं प्रबाध्य व्यवहितस्य पूर्वसूत्रस्यापि तेन नियमविधानात्। एवञ्च सकलेष्टसिद्धौ सूत्रत्रयन्यासेनैव हल्ग्रहणसहभूतान्योन्याश्रयो निरस्यते।

नच 'अपाणिनीयन्तु भवति' इति भाष्यात् सति सूत्रभेदेऽपाणिनीयत्वापत्त्या पारायणादावदृष्टहानिप्रसङ्ग इति वाच्यम्, यदि तदर्थकमेव सूत्रान्तरं कल्प्येत, ततोऽधिकं वा क्रियेत तदेव सूत्रभेदः, तदुपसंहरणपूर्वकसूत्रान्तरविधानञ्च न दोषाय प्रकल्प्यत इत्येतदाशयकात् 'अच उपसर्गात्त' इति सूत्रभाष्यात् सति सम्भवेऽङ्गानां दृष्टद्वारैवादृष्टार्थत्वमित्याशयावगमादिति चेन्न, ज्ञानजनकमनोव्यापारगौरवस्याप्यभ्युपगमेन योगविभागनियमज्ञापकाश्रयणेऽतिगौरवादिति दिक्।

**५ प्र०—एकशेषनिर्देशाद्वा सिद्धम्—हल् च हल् च हल् हलन्त्यमिति भाष्यग्रन्थं व्याख्याय 'न विभक्तौ' 'हलन्त्य' मित्यनयोरपि प्रसक्तान्योन्याश्रयो वार्यताम्।**

उ०—हल्पदार्थज्ञानमित्पदार्थज्ञानाधीनमित्पदार्थज्ञानं च हल्पदार्थज्ञानाधीनमिति रीत्याऽन्योन्याश्रयमाशङ्क्य 'हलन्त्यमित्संज्ञं भवति, लकारश्चेद्भवतीति वक्तव्यम्' इति सम्पाद्य भाष्ये 'एकशेषनिर्देशाद्वा सिद्धम् हल् च हल् च हल्—हलन्त्यमित्युक्तम्' **तस्यायमाशयः—**

हल्पदे एकशेषं विधाय निरूप्यनिरूपकभावसम्बन्धसामान्यार्थकषष्ठ्यन्तस्य तस्यान्त्यपदेन समासे द्वन्द्वान्ते श्रूयमाणस्यैवान्त्यशब्दस्योभयत्रान्वये 'हल्सूत्रान्त्यं, हल्रूपान्त्यञ्चेद्भवतीति वाक्यार्थद्वये सम्पन्ने नान्योन्याश्रयशङ्कालेशोऽपीति। अत्र हल्रूपान्त्यमिति पक्षे षष्ठ्यनुपपत्तिस्तु नाशङ्कनीया, 'राहोः शिर' इत्यत्रेव व्यपदेशिवद्भावेन हल्यपि हल्निरूपितान्त्यत्वस्यारोपादन्त्यत्वे हल्निरूपितत्वस्य सम्भवात्।

नन्वेवं निरुक्तान्योन्याश्रयपरिहारसम्भवेऽपि—'न विभक्तावि'त्येतद्घटकविभक्तिपदबोध्यसुप्तिङ्बोधः 'हलन्त्यमिति वाक्यार्थबोधसापेक्षः, तद्बोधश्चापवादवाक्यार्थबोधसापेक्ष इति पुनरपि समापतत्येवान्योन्याश्रय इति चेन्न, अपवादवाक्यार्थबोधात्पूर्वमपि तात्पर्यनिश्चयादिकसमाधीनपदपदार्थोपस्थितौ उत्सर्गवाक्या-

र्थबोधे क्षतिविरहात्। न चाऽपवादवाक्यार्थज्ञानस्यैव प्रतिबन्धकतया नैवं युक्तमिति वाच्यम्, अभावज्ञाने प्रतियोगिज्ञानस्यावश्यकत्वेऽपि प्रतियोगिज्ञानस्य तन्निरपेक्षसम्भवे बाधकविरहात्। नन्वेवमुदासीनविषये स्वापवादविषयेऽप्युत्सर्गशास्त्रप्रवृत्त्यापत्तौ 'पश्चाद्भुक्तवन्तम्प्रति प्रब्रूयान् मा भुङ्क्त्था–इति किं तेन कृतं स्या' दिति 'स्थानेऽन्तरतम' इति सूत्रभाष्यबोधितापवादशास्त्रनैरर्थ्यक्यापत्तिमूलकेन 'प्रातिपदिकार्थसूत्रभाष्यपठितेन—'पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गा' इति न्यायेन पूर्वमपवादवाक्यार्थबोधस्यैवौचित्यचिन्तनेन प्रागुक्तरीत्या सुप्तिङ्बोधाभावेनान्योन्याश्रयस्तदवस्थ एवेति चेन्न, तस्य लक्षणैकचक्षुष्काशयतया दोषाभावात्। तथा हि—'सूत्रानुसारेण प्रवृत्तिशीलस्य, लक्षणैकचक्षुष्कस्य 'असति बाधके उद्देश्यतावच्छेदकव्यापकताया नियमतो विधेये विधेयसंसर्गे वा भानात् उदासीनापवादविषयेषु सर्वत्रोत्सर्गकृतसंस्कारबुद्धावुत्सर्गापवादयोर्लक्ष्यभेदव्यवस्थानुपपत्त्या 'भुक्तवन्तम्प्रति मा भुंक्था' इति वाक्यस्यैवापवादशास्त्रवैयर्थ्यापत्त्या च पूर्वमपवादशास्त्रवाक्यार्थबोधनिश्चयेन तद्विषयलक्ष्यं संस्कृत्य ततोऽवशिष्टलक्ष्यं प्रतिलक्ष्यं वाक्योपप्लवद्वारोत्सर्गेण संस्करोति। तथा चैतन्मते पूर्वमपवादशास्त्राणि बुद्ध्यारूढानि भवन्ति, पश्चादुत्सर्गा लक्ष्य संस्कुर्वन्तीति परिभाषार्थः सम्पद्यते। लक्ष्यैकचक्षुष्कस्तु–अपवादशास्त्रवाक्यार्थबोधनिश्चयमन्तराऽपि तद्विषयं परित्यज्य शास्त्रप्रक्रियास्मरणजन्यधर्मप्राप्तये उत्सर्गेण लक्ष्यसंस्कारं जानीते। अत एव प्रकल्प्य चापवादविषयं तत उत्सर्गः प्रवर्त्तते इत्युक्तम्' एवञ्च लक्ष्यैकचक्षुष्कमतेऽपवादवाक्यार्थबोधात्पूर्वमप्युत्सर्गवाक्यार्थबोधे क्षतिविरह इति 'न विभक्तौ' 'हलन्त्य' मित्युभयत्र नान्योन्याश्रय इति दिक्।

**६ प्र०—'आदिरन्त्येन सहेता' इत्यत्रान्त्यादिशब्दयोः परस्परं सापेक्षतया अन्यतरोपादानेनैवापरस्याक्षेपसंभवे उभयोपादानप्रयोजनं प्रतिपाद्य सहेताशब्दोपादानप्रयोजनं प्रतिपादयन्तु।**

उ०—आदिरन्त्येने'ति सूत्रे आदिग्रहणाभावे अन्त्यशब्देन पूर्वेषां समेषामेवाक्षेपादिगादिप्रत्याहारेऽकारादिग्रहणापत्तिः, एवमन्त्यशब्दग्रहणाभावे आदिशब्देन परेषां समेषामेवाक्षेपात् इणादिप्रत्याहारे ञादीनां ग्रहणापत्तिः स्यादतस्तद्वारणायोभयोपादानं कृतम्। तथा सति न कोऽपि प्रागुक्तदोषः समापतति। तथाहि–अयमादिरन्त्योवेत्युक्ते अवशिष्टमपि किञ्चिदस्तीति नियमतः प्रतीत्या परस्मिन् सति यस्मात्पूर्वो नास्ति तस्यैवादिपदार्थतया, 'पूर्वस्मिन् सति यस्मात्परो नास्ति तस्यैव

चान्त्यपदार्थतया, इगादिप्रत्याहारेऽकारादिवर्णग्रहणे इकारादीनामादित्वानुपपत्तिः इणादिप्रत्याहारे अादीनां ग्रहणे णकारादीनामन्त्यत्वानुपपत्तिश्च स्यातामतस्तदुभय-ग्रहणसामर्थ्यात् ततः पूर्वेषां परेषाञ्च नैव ग्रहणमिति भावः। तथा च यत्किञ्चित्समुदायविशिष्टत्वमादित्वं, वैशिष्ट्यञ्च स्वघटकत्व, स्वघटकाव्यवहितपूर्वत्व, स्वघट-काव्यवहितोत्तरत्वाभाववत्त्व, एतत्त्रितयसम्बन्धेन, एवं यत्किञ्चित्समुदायविशिष्टत्व-मन्त्यत्वम्, वैशिष्ट्यञ्च स्वघटकत्व, स्वघटकाव्यवहितोत्तरत्व, स्वघटकाव्यवहित-पूर्वत्वाभाववत्त्व, एतत्त्रितयसम्बन्धेन। एवञ्चात्रायन्ताभ्यां प्रथमावयवचरमावयव-त्वेन बोधकाभ्यां शब्दाभ्यां स्वघटितः समुदाय आक्षिप्तः संज्ञी, तस्य च समुदाय-स्यैकत्र लक्ष्ये प्रयोगाभावात्, प्रत्येकं संज्ञित्वं बोध्यम्। समुदायेऽवतरन्त्याः संज्ञायाः प्रत्येकमेवानायरपरविश्रामकल्पनात्। अन्त्यस्य च न प्रत्याहारजन्यबोधविषयत्वं तस्येत्संज्ञालोपाभ्यामपहारात्। इद्ग्रहणाभावे 'ञमङणनम्' इत्यादिसूत्रघटकणकारा-दिभिरपि अणादिप्रत्याहारा आपद्येरन्। अतस्तद्वारणायेद्ग्रहणं कृतम्। सहपदो-पादानाच्च 'इक्' इत्यादिवर्णद्वयात्मकसमुदाय एव संज्ञेति समुदायादेव इकः' इत्यादौ विभक्त्युत्पत्तिर्न तु आदिमात्रात्। न चान्त्यस्येत्संज्ञालोपाभ्यामपहारात् तत्सहितत्व-मादेः सर्वथा दुर्घटमिति वाच्यम्? चतुर्दशसूत्रघटकान्त्यवर्णानामित्संज्ञालोपाभ्याम-पहारेऽपि इगादिशब्देषु इत्संज्ञालोपाभावात्। 'अन्त्येन' इत्यस्यान्त्येत्संज्ञकवर्णसदृ-शेन' इत्यर्थकतया दोषाभावात्। व्यक्तिपक्षे एतादृशार्थकल्पनाया एवौचित्यात्। सादृश्यमूलिकैव चात्र तत्त्वप्रत्यभिज्ञा भवतीति भावः।

**७ प्र०—उपदेश इति सूत्रे प्राचीनमतानुसारेणोपदेशपदार्थं सप्रमाणं निरूप्य नव्यमते प्रसक्तं भाष्यविरोधं समाधायोपदेशपदार्थः स्पष्टं निरुच्यताम्।**

उ०—उपपूर्वकदिश्धातोर्भावे घञि निष्पन्नस्योपदेशपदस्य आद्यमुच्चारण-मित्यर्थः। आद्यत्वञ्च—स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्र-योजकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वम् तथाचाज्ञातस्वस्वरूपज्ञापक-मुच्चारणमाद्योच्चारणमिति फलितम्। आदेच इति सूत्रे 'येषां स्वस्वरूपज्ञापनायापूर्व-मुच्चारणं तेषामेवोपदेशव्यवहार' इति कैयटोक्तिरुपदेशपदस्य तथार्थे युक्तिः। एव-ञ्चादेच' इति सूत्रे 'उद्देशश्च प्रातिपदिकानां नोपदेश' इति भाष्यं प्रकृतसूत्रे 'प्रत्यक्ष-माख्यानमुपदेश' इति भाष्यञ्चोपदेशपदस्य भावे घञा आद्योच्चारणार्थत्वे प्रमाण-भूते। (करणे घञि तु सर्वं विरुध्यते) इति प्राचीनाः।

**नवीनास्तु**—'उपदेशेऽजनुनासिक' इति सूत्रे 'उपदेश इति किमर्थम् ? अभ्र आँ अपः'। कः पुनरुद्देशोपदेशयोर्विशेषः ? इति भाष्यम्।

तत्र—यदि प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देशस्तर्हि 'लृटः सद्वा' 'निष्ठे'ति विहितानां शतृशानच्क्तक्तवतूनामवयवस्य तादृशोपदेशपदवोध्यत्वाभावादित्वानापत्तिः। 'यत्र निष्ठापदं तत्र क्तक्तवतू उपतिष्ठेते' इत्येवं 'क्तक्तवतू निष्ठे'त्यस्यार्थं स्वीकृत्य परिभाषात्वाङ्गीकारे निष्ठेत्यादौ क्तक्तवत्वोरुपस्थितावित्संज्ञायाः 'निष्ठा शीङि'ति कित्त्वनिषेधाज्ज्ञापकाच्च क्तादावुपदेशत्वकल्पनात्ककारस्येत्त्वस्य च सौलभ्येऽपि 'राजसूयसूर्य, चित्याग्निचित्ये, त्यादिनिपातानुमितक्यवादीनां पादेरित्त्वानापत्तिः। तस्मादित्संज्ञासूत्रे उपदेशपदेनोद्देशस्यापि ग्रहणे 'अभ्र आँ अपः' इत्यादावपीत्संज्ञा प्राप्नोतीत्येतस्य व्यावृत्तिः शतृशानजादीनां ग्रहणञ्च येन भवति' स विशेषः कः ? इति कः पुनरिति प्रश्नस्याशयमनुसन्धाय अनुवाकप्रश्ने 'इषेत्वा' इत्यादावनुवाकाख्याने उद्दिष्टो मेऽनुवाक इति मार्गप्रश्ने अमुष्मिन्नवकाशे हस्तदक्षिणो ग्राह्य इत्याख्याने उपदिष्टो मे पन्था इति व्यवहारेणापि तयोः संकीर्णत्वमुपपाद्य च शतृशानजादीनां संग्रहाय 'अभ्र आँ अपः' इत्यस्य वारणाय च धातुप्रातिपदिकादिग्राहकशास्त्रपदार्थकं करणल्युटा साधितमुपदेशनपदमन्तर्भाव्य वार्त्तिककृता विहितस्य 'उपदेशनेऽजनुनासिक, इति वार्त्तिकस्य भाष्यकृतोपदेशपदे वाहुलकात्करणे घञा प्रत्याख्यातत्वात्, भावघञन्तोपदेशपदस्योत्तरत्रानुवृत्तौ 'भवतष्ठक्छसा'वित्यादिविहितेषु परस्य सत्त्वेन कादेरन्त्यत्वाभावादित्त्वानापत्त्या तदर्थं 'सुपदेशे प्रत्ययत्वादिविशिष्टान्त्य इदि'त्यर्थे उपदेशपदवैयर्थ्याच्च—उपदेशपदे वाहुलकात्करणे एव घञ् सम्यगित्याहुः।

ननु उपदेशपदस्य भावघञन्तत्वे आद्योच्चारणे विद्यमानमन्त्यमित्याद्यर्थे यत्किञ्चित्समुदायान्त्यस्यापि प्राप्तायां इत्संज्ञाया वारणार्थं हलन्त्यसूत्रे—'व्यवसितान्त्यमिति वक्तव्यम्, के पुनर्व्यवसिताः ?—धातुप्रातिपदिकनिपातागमादेशाः, इत्युक्तस्य वार्त्तिकस्य करणसाधनोपदेशपदाङ्गीकारे प्रत्यासत्त्या शास्त्रान्त्यस्यैव तत्प्राप्त्याऽसङ्गतिरिति चेन्न, समुदायद्वाराऽवयवस्यापि तत्करणतया करणसाधनोपदेशपदानुवृत्तावपि तदन्त्यस्येत्त्वापत्तिनिराकरणाय 'व्यवसितत्वपर्य्याप्त्यधिकरणीभूतसमुदायान्त्यस्येत्त्वमित्यर्थलाभार्थं 'व्यवसितान्त्यमिति वक्तव्यमिति वार्त्तिकस्य सार्थक्यात्।

ननु 'षष्ठीप्रकल्पकत्वं तस्ये'ति पक्षे 'गुप्तिज्किद्भ्य' इत्यादावपि षष्ठीप्र-

क्लृप्त्यापत्तिमाशङ्क्य सामर्थ्याद् गुपादिभ्यः परस्य सनोऽनुमानेनानुमीयमानस्य तस्य स्थाने आन्तरतम्यात् सनेव भविष्यतीनि समाहिते 'उपदेशे' इत्युच्यमाने-त्संज्ञा न प्रकल्प्येतेति तस्मिन्निति सूत्रस्थं भाष्यं करणसाधनोपदेशपदानुवृत्तौ सर्वथा तदननुवृत्तौ च विरुद्ध्येतेति चेन्न, तस्यैकदेश्युक्तित्वेनासाधकत्वात् । तथा हि 'ङमो ह्रस्वादचीं'त्यादौ यत्र पञ्चमी सप्तमी चेत्युभयं निर्दिश्यते तत्र किं पूर्वस्य कार्यमथ परस्येति सन्देहे परत्वानवकाशत्वाभ्यां पञ्चमीनिर्देशो वलवानिति सिद्धान्तिनोक्ते पूर्वस्य कार्यमिष्टं चेत्पूर्वस्य षष्ठी परस्य चेत्परस्य षष्ठीत्यर्थकं 'यथार्थं वा षष्ठीनिर्देशः कर्त्तव्यः' इति सप्तमीनिर्देशस्य 'गोतो णिदि'त्यादौ पूर्वत्र 'ङमो ह्रस्वादचीत्यादौ क्वचिदुत्तरत्रावश्यकत्वेनोभयनिर्देशे गौरवमपश्यतैकदेशिना समाहितम् ।

ततः परेणैकदेशिना 'षष्ठीस्थाने योगा' इत्यतो षष्ठीपदानुवृत्त्या पूर्वस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे, एवमुत्तरस्य कार्यित्वप्रतिपादनयोग्या षष्ठी तद्बोधकपदे भवतीति रीत्या तस्मिन्नित्यादेरेव षष्ठीप्रकल्पकत्वमाश्रित्य 'यथार्थं वा षष्ठी'त्येकदेश्युक्तिः स्वपक्षे षष्ठीपदानुवृत्तिगौरवमुभयोः प्रकल्पकत्ववारणाय परत्वानवकाशत्वावश्यकत्वञ्चाचिन्तयता प्रत्याख्याता ।

ततः षष्ठीप्रक्लृप्तवादिनैकदेशिना षष्ठीप्रक्लृप्तेः प्रागेव परत्वादन्तरङ्गत्वाच्चोपदेशोत्तरकालं सूत्र एवेत्संज्ञा, कार्यं तु प्रयोग एव, तथा च निरनुवन्धकस्यैव प्रत्ययत्वेन विधानात्तदादेशस्य न कथमपि सानुवन्धकत्वमिति सूचकेन 'अथवा स्यादेष दोषो यदीत्संज्ञा आदेशं प्रतीक्षेत ? तत्र च खलु कृतायामित्संज्ञायां लोपे च कृते आदेशो भविष्यती'त्यनेन तदुक्तौ व्याहतिरुद्भाविता ।

**अनन्तरञ्च**—हलन्त्यसूत्रे उपदेशपदासम्बन्धमनुसन्धाय अथवा नानुत्पन्ने सनि प्रक्लृप्त्या भवितव्यम्, अनुत्पत्तौ धातोः परस्येति वक्तुमशक्यत्वात्' यदा चोत्पन्नः सन् कृतसामर्थ्या पञ्चमीति प्रक्लृप्तिर्न भविष्यतीति सिद्धान्तिना समाधानान्तरमुक्तम् । एवञ्चान्ते उपदेशाननुवृत्त्यैव सिद्धान्तिसमाधानस्य सत्त्वादुपदेशे इत्युच्यमाने, त्यादेरेकदेश्युक्तित्वं स्पष्टमेवेति दिक् ।

**८ प्र०—'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्रे कालग्रहणस्य, अज्ग्रहणस्य च प्रयोजने प्रतिपाद्य 'तित उ च्छत्र'मित्यत्र वैकल्पिकतुग्वारणोपायश्चिन्त्यताम् ।**

**उ०**—ननु 'उकालो ह्रस्वः' इति प्रथमवाक्ये एकमात्रिकोकारोच्चारणकाल-

सदृशोच्चारणकालस्याचोऽण्त्वात् सवर्णग्रहणे सति द्वित्रिमात्रिकयोरपि वर्णयोर्ह्रस्वसंज्ञापत्त्या 'प्रदाय' 'प्रलूय' इत्यादौ 'ह्रस्वस्य पिति कृतीति तुगागमापत्तिरिति चेन्न, 'ऊ अजित्येतावन्मात्रेणैवाज्ग्रहणसामर्थ्यात् 'ऊसदृशोऽज्' इत्यर्थे प्रत्यासत्त्या व्याख्यानाच्च कालकृतस्यैव सादृश्यस्य ग्रहणेन सकलेष्टसिद्धौ कृतस्याधिककालग्रहणस्य 'उच्चारितसम्बन्धिकालसदृशकालस्यैव ह्रस्वादिसंज्ञा, न तु तेन गृहीतसम्बन्धिकालसदृशकालस्यापीत्यर्थकल्पनेन दोषाभावात्। तादृशह्रस्वसंज्ञाविधायकवाक्ये उकालपदेन ग्रहणकशास्त्रबललब्धद्वित्रिमात्रिकवर्णयोर्ग्रहणाभावेन ह्रस्वत्वानापत्त्या 'प्रदाये'त्यादौ' तुको वक्तुमशक्यत्वात्। तदुक्तं भाष्ये-यावत्तपरकरणं तावदत्र कालग्रहणम्' इति। अज्ग्रहणाभावे तु 'प्रतक्ष्य' इत्यादौ क्षकाररूपव्यञ्जनद्वयस्यैकमात्रिकतया ह्रस्वत्वापत्त्या 'ह्रस्वस्य पिति कृति तुक्' इति तुगापत्तिः स्यात्, कृते तु अज्ग्रहणे व्यञ्जनस्याच्त्वाभावेन ह्रस्वत्वानापत्त्या न तुग् भवतीति भावः। नचैवं 'वर्णग्रहणे जातिग्रहणमि'ति परिभाषया अजिति वर्णग्रहणे अच्त्वजात्यवच्छिन्नस्य ग्रहणात् 'तित उ च्छत्रम्' इत्यत्राकारोकाररूपस्याच्त्वजात्यवच्छिन्नस्योभयस्यापि अज्ग्रहणेन ग्रहणापत्त्या द्विमात्रिकतया च दीर्घसंज्ञायाः सत्त्वेन 'दीर्घात्' 'पदान्ताद्वा' इति तुक् स्यादिति वाच्यम्? ज्ञापकसिद्धाया वर्णग्रहणपरिभाषाया असार्वत्रिकत्वात्, अन्तरङ्गत्वेन ह्रस्वत्वनिमित्तकनित्यतुक एव पूर्वं प्रवृत्तत्वेन च दोषाभावात्।

**६ प्र०—'तुल्यास्यप्रयत्नं सवर्ण' मित्यत्र शेखरग्रन्थोक्ते तुल्यावास्यप्रयत्नौ यस्येति विग्रहवाक्ये तुल्यशब्दस्य पुंस्त्वं समर्थ्य 'तुल्यास्य प्रयत्न'मिति 'नाज्झला'विति च सूत्रयोरेकवाक्यता प्रदर्शनीया।**

उ०—ननु नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्या'मिति नपुंसकैकशेषेण 'तुल्या' विति पुंल्लिंगनिर्देशोऽसङ्गत इति चेन्न, प्रवृत्तिनिमित्तनिष्ठनानाप्रकारतानिरूपितनानाविशेष्यताकबोधकरूपशब्दतन्त्रविषय एवैकशेषशास्त्रप्रवृत्त्या प्रवृत्तिनिमित्तनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधकत्वरूपार्थतन्त्रस्य प्रकृते स्वीकारेणादोषात्। 'प्रत्यर्थं शब्दाभिनिवेश' इति भाष्यस्य प्रतिप्रवृत्तिनिमित्तनिष्ठप्रकारकं शब्दनिवेश इति भावः। प्रकृते च तुल्यत्वनिष्ठैकप्रकारतानिरूपितनानाविशेष्यताकबोधस्यैव जननात्। अनेकशब्दप्रयोगस्याप्राप्तत्वाच्चेति।

ननु 'तुल्यास्यप्रयत्न'मिति 'नाज्झला'विति च सूत्रयोरेकवाक्यतायाम्। 'आज्झलभिन्नस्तुल्यास्यप्रयत्नो वर्णः सवर्ण इत्यर्थे सूत्रार्थप्रसिद्धिः। सर्वस्य वर्णस्याज्झलरूपत्वात् आकाराजन्यतरभिन्नेन तुल्यास्यप्रयत्नमाकाराज्भिन्नं सवर्णं हल्भिन्नेन

तुल्यास्यप्रयत्नं हल्भिन्नं सवर्णमिति सम्मेल्य वोधस्तु न समीचीनः, एकवाक्यताविधानेच्छया वाक्यद्वयसम्पादनस्यानुचितत्वादिति चेन्न, स्वजनकस्थानजन्यत्व, स्वाजनकस्थानाजन्यत्व, स्वजनकस्थाननिष्ठजनकत्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रतियोगित्व, स्वजनकप्रयत्नजन्यत्व, स्वाजनकप्रयत्नाजन्यत्व, एभिः पञ्चभिः सम्बन्धैः स्वविशिष्टो वर्णः स्वसवर्ण इति 'तुल्यास्य' सूत्रस्य पर्यवसितार्थे स्ववृत्तिद्वित्वत्त्वमप्येकं सम्बन्धं दत्त्वा तत्र सम्बन्धघटकद्वित्वे आकाराजन्यतरहल्वर्णोभयवृत्तिद्वित्वभिन्नत्वं निवेश्यते ततश्चाकाराजन्यतरहल्वर्णोभयवृत्तिद्वित्वभिन्नं यत्स्ववृत्तिद्वित्वं तदवयवत्वरूपषष्ठसम्बन्ध एव तेन नाज्झलावित्यस्यैकतायास्तात्पर्यादिति दिक् ।

**१० प्र०—यावदास्यभवतुल्यत्वविवक्षणे कङादीनां सावर्ण्यं शेखरोक्तदिशा, समर्थनीयम् ।**

उ०—ननु यावदास्यभवतुल्यत्वविवक्षणे नासिकारूपदेशभेदात् कङयोः सावर्ण्यं न स्यादिति चेन्न, 'आस्ये तुल्यदेशप्रयत्नम्' इति वार्तिके किमास्योपादाने प्रयोजन मिति प्रश्ने प्रयत्नविशेषणमास्योपादनमिति सम्पाद्य तद्बथावर्त्त्यत्वेन वाह्यप्रयत्नान् प्रदर्श्य यथा तृतीयास्तथा पञ्चमाः, 'आनुनासिक्यमेषामधिको गुण' इति देशविशेषणमास्यग्रहणमिति गूढाशयेन, भाष्येण युक्तमाद्गुणपदोक्तेश्चानुनासिक्यस्य वाह्यप्रयत्नत्वसूचनेन प्रकृतसूत्रे नासिकाया आस्यशब्देन नासिकास्थप्रयत्नस्य च प्रयत्नशब्देनाग्रहणसूचनादिति दिक् ।

**११ प्र०—पूर्वत्रासिद्धमित्यस्याधिकारसूत्रत्वे विधिसूत्रैः सह कथं वाक्यार्थवोध इति सयुक्तिकं सफलश्चोपपाद्य कार्यासिद्धत्वदूषणपूर्वकं शास्त्रासिद्धत्वं संस्थाप्य 'पूर्वत्रने'ति न्यासेन कथन्नाभीष्टसिद्धिरिति विशदं निगद्यताम् ।**

उ०—'पूर्वत्रासिद्ध' मित्यस्याधिकारत्वे 'ढोढ़' इत्यादौ तदुपस्थितौ विधेयभेदे वाक्यभेदस्यौचित्यात् 'हस्य ढो भवति, इदञ्च शास्त्रं पूर्वत्रकर्त्तव्येऽसिद्धं भवती' ति वाक्यभेदेनान्वयो नागेशसम्मतोऽवसेयः । ननु 'पूर्वकार्यम्प्रत्यसिद्धत्वविशिष्टो ढो भवती'त्येवं विशिष्टविधेयभेदाभावात्पदैकवाक्यतयैवान्वयोऽस्त्विति चेन्न, तथा सति 'अदसोऽसे'रित्यादिनाऽप्यसिद्धत्वविशिष्टस्य मुत्वस्य विधानेन 'न मुने' इत्यनेनापि तथाविधस्य मुत्वस्यैव निषिद्धत्वेनामुनेत्यत्र मुत्वानापत्तेः ।

वाक्यभेदेनान्वयाङ्गीकारे तु अदसोऽसान्तस्य दात्परस्य उदूतौ दो दस्य

च मो भवति, इदञ्च शास्त्रं पूर्वत्रकर्त्तव्येऽसिद्धं भवतीत्यर्थेऽसिद्धत्त्वस्य प्राधान्येन विहितत्वात् 'न मुने' इत्यनेनासिद्धत्वस्यैव निषेधे न दोषलेशोऽपीति ।

अत्र **कार्यासिद्धत्वपक्षस्वीकारे**—अद अ औ इति दशायामारोपरूपस्यातिदेशस्याधिष्ठानसापेक्षतया पूर्वं परत्वान्मुत्वेऽनन्तरमसिद्धत्वेऽपि 'देवदत्तहन्तृहत'न्यायेनाकाराभावेनेष्टपररूपाद्यनापत्तेः । एवञ्च शास्त्रासिद्धत्वपक्ष एव समीचीन इति ।

न च शास्त्रासिद्धत्वेऽप्यनित्यत्वेन 'देवदत्तहन्तृहत'न्यायाप्रवृत्तिरवश्यं वाच्या, अन्यथा पिपठीरित्यत्र पूर्वप्रवृत्तिकत्वेन सत्वे शास्त्रासिद्धत्वेऽप्युक्तन्न्यायेन सकारवुद्धेरभावाद्रुत्वं न स्यादिति कार्यासिद्धत्वेऽप्यनित्यत्वेनैव न्यायाप्रवृत्त्या न दोष इति वाच्यम् , शास्त्रासिद्धत्वेऽन्तरङ्गत्वात् त्रैपादिकस्य प्रवृत्तावपि तत्तच्छास्त्र एवाभावाऽऽरोपेण सकारादिस्थानिनिवृत्तिवुद्धेरभावेन दोषाभावात् । न च वुद्धेस्तथात्वेऽपि तत्र सत्वे रुत्वं कथमिति वाच्यम् । 'नहि रजतभ्रमप्रयुक्ता प्रवृत्तिः शुक्तिं न गोचरयती' त्यनुसारेणादेश एव सकारस्य स्थानिवुद्ध्या रुत्वकार्यप्रवृत्तेरिति ।

ननु लाघवात् 'पूर्वत्र ने'त्येव सूत्रमस्त्विति चेन्न, तस्य पूर्वशास्त्रप्राप्तौ निषेध इत्यर्थे 'राजन् अश्व' इति दशायां कस्यापि पूर्वशास्त्रस्याप्राप्त्या निषेधाप्रवृत्तौ नलोपे जाते 'भुक्तवन्त'मिति न्यायेन पुनर्निषेधाप्रवृत्तौ राजाश्व इत्यत्र दीर्घसिद्ध्या तदर्थं विधीयमानस्य, नियमस्यानुपयोगेन 'नलोप' इति सूत्रासङ्गतेः ।

न च 'नलोप' इति सूत्राकरणे नितरां लाघवानुधावनमितीष्टापत्तिरेवेति वाच्यम् एवं राजाश्व इव राजभ्यामित्यत्रापि 'सुपि चे'त्यनेन दीर्घापत्तेर्दुर्वारत्वात् । न च पूर्वशास्त्रविषयसम्भावनायां निषेध इत्यर्थे न पूर्वोक्तदोष इति वाच्यम् , एवमपि सुब्विधिदीर्घविषयसम्भावनया राजभ्यामित्यादौ नलोपानापत्तेरिति दिक् ।

**१२ प्र०—अणुदित्सूत्रेऽप्रत्ययघटकप्रत्ययपदस्य विधेयपरत्वप्रत्ययपरत्वपक्षयोः सिद्धान्तपक्षं समर्थ्य 'अस्य च्वौ' इत्यादावाकारग्रहणमुपपाद्यत ।**

उ०—ननु 'अणुदित्सवर्णस्य चाप्रत्ययः इति सूत्रेऽप्रत्यघटकप्रत्ययपदस्य पारिभाषिकप्रत्ययपरतया 'त्यदादीनामः' इत्यादावकारेणाऽऽकारग्रहणापत्तिरिति चेदत्र प्राञ्चः-प्रतीयते विधीयते इति प्रत्यय इति व्युत्पत्त्या प्रत्ययपदस्य विधीयमानार्थकतया ततो नञ्समासेऽविधीयमानस्यैवाणः सवर्णग्राहकत्वसिद्ध्या 'त्यदादीनामः' इत्यादावकारस्य विधीयमानतया सवर्णग्राहकत्वाभावेन दोषाभावात् तथा च

तत्फलितार्थपरमेव–भाव्यमानेन सवर्णानां ग्रहणं नेति वचनमित्याहुः। वस्तुतस्तु 'रूढिर्योगापहारिणी' इति रीत्या प्रत्ययपदं प्रत्ययसंज्ञकमेवेति तत् स्थालीपुलाकन्यायेन 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषां ज्ञापयतीति नवीनमतमेव समीचीनम्, प्रत्ययपदस्य तादृशयौगिकार्थपरत्वन्तु न युक्तम्, वार्तिककृता टित्किन्मित्सूपसंख्यानस्योक्तत्वेन तदसङ्गत्यापत्तेः। भाष्यकृतः—'अप्रत्यय इति किमर्थम् 'सनाशंसभिक्ष उः' 'असाम्प्रतिके' अत्यल्पमिदमुच्यते 'अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्' इत्यादिरीत्याऽप्रत्ययपदस्योक्तपरिभाषाज्ञापकत्वोक्तेरसङ्गत्यापत्तेश्च। प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वे 'ज्यादादीयसः' इति सूत्रस्थभाष्यमपि प्रमाणम्, तथा हि—तत्र किमर्थमादित्युच्यते ज्याद् इत्येवोच्यतां का रूपसिद्धिः, आन्तर्यतो दीर्घस्य दीर्घो भविष्यति, एवन्तर्हि इदमेव ज्ञापयति 'भवत्येषा परिभाषा भाव्यमानेन' इत्यादि। प्राचोक्तिरीत्याऽकारस्य विधीयमानतया दीर्घग्राहकत्वाभावेन शङ्का-समाधानयोरुभयोरप्यसङ्गत्यापत्तिः। तथा च जातिपक्षे सवर्णग्रहणवारणाय, व्यक्तिपक्षे गुणाभेदकत्वप्रयुक्तप्राप्तसवर्णग्रहणवारणाय चावश्याश्रयणीयोक्तपरिभाषयैव 'त्यदादीनामः' इत्यादावपि सावर्ण्यग्रहणं वारणीयमिति बोध्यम्। नचैवमपि 'अणुदित्सूत्रे अण्ग्रहणेन वर्णसामाम्नायस्थानामेव ग्रहणात् 'अस्य च्वौ' इत्यादावकारेण सावर्ण्यग्रहणाप्राप्त्या 'शाली भवति' इत्यादावीत्वानुपपत्तिः, णकारादिचिह्नेन सूत्रघटकाण्प्रत्याहारे आक्षरसमाम्नायिकप्रत्यभिज्ञानेन 'प्रत्याहारस्याद्यवर्णोपस्थितेषूच्चारिताभेदेन गृहीतेषु सूत्रस्य चरितार्थतया व्यक्तिपक्षे तत्रत्यात्रत्यव्यक्त्योर्भेदेन 'अस्य च्वौ' इत्यादौ, इगादिप्रत्याहारघटकद्वितीयवर्णादौ चोच्चारितस्यैव ग्राहकतयाऽनुच्चारितेऽप्रवृत्तेरिति वाच्यम्? जातिपक्षस्वीकारेण दोषाभावात्। अत एव 'अचात्ताम्' इत्यादावनेकतकारादीनां झल्त्वसिद्ध्या 'झलो झलि' इति सलोपसिद्धिः। सूत्रारम्भसामर्थ्यादेवात्र सलोपसिद्धिस्तु वक्तुमशक्या, 'अभित्थाः' इत्यादौ विजातीयतकारथकारमध्यवर्तिसकारलोपसम्पादनेन सूत्रस्य चरितार्थत्वेन वैयर्थ्याभावात्।

नचैवमिगादावाद्यवर्णे इकारादावपि जातिपक्षस्वीकारेणैव दीर्घेकारादिग्रहणोपपत्त्या, अणुदित्सूत्रं व्यर्थमिति वाच्यम्? 'सूत्रेऽण्ग्रहणञ्च न कार्य'मित्युक्त्या तत्प्रत्याख्यानपक्षस्यैव लाभेनादोषात्। न च ऋऌवर्णयोः सावर्ण्येऽपि विजातीयतया ऋकारेण ऌकारग्रहणानुपपत्त्या 'उपसर्गादृतिधाता'वित्यादौ दोषापत्तिरिति वाच्यम् ऋऌवर्णयोर्मिथः सावर्ण्यं वाच्यम्' इति वार्तिकेन ऋत्वरूपसमानजातित्वस्यैवातिदेशेन दोषविरहात्। न च तथा सति ऋऌवर्णयोः सावर्ण्याभावेन 'होतृ ऌकारः' इत्यत्र

सवर्णदीर्घो न स्यादिति वाच्यम् ? तादृशसमानजातित्वातिदेशे तद्व्यापकसावर्ण्यस्य सुतरां लाभेन दीर्घोपपत्तेः। लृकारात्मकऋकारीयसवर्णातिरिक्तेऽकारादिसवर्णे आकारादौ सर्वत्र समानजातित्वस्य सत्वात्। ननु समानजातित्वस्यातिदेशे ऋलृवर्णयोः कार्यसाङ्कर्यापत्तिरिति वाच्यम् ? पृथगनुबन्धकरणसामर्थ्यात् ऋदित्वलृदित्वप्रयुक्तकार्यसाङ्कर्याभावात्। अस्मिन् जातिपक्षे 'अइउण्' इति सूत्रशेषोक्तभाष्यरीत्या 'तपरस्तत्कालस्य' इत्यस्य जातिग्रहणप्राप्तसावर्ण्यग्रहणनियामकत्ववत् 'अप्रत्ययः' इत्यस्य योगविभागेन जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकत्वात्। 'त्यदादीनामः' इत्यादौ विधेये दोषाभावः। तथैव तुल्ययुक्त्या गुणाभेदकत्वप्राप्तसवर्णग्रहणनिषेधकत्वमप्यस्य ज्ञेयम्। तेन घटवत् इत्यत्र नानुनासिकत्वमिति दिक्।

**१३ प्र०—'तपरस्तत्कालस्ये'ति सूत्रे तपरशब्दस्य बहुव्रीहितत्पुरुषाश्रयणे प्रमाणं फलञ्च प्रतिपाद्य प्रकृतसूत्रस्याभिमतं विध्यर्थत्वं नियमार्थत्वं वा सयुक्तिकमुपपाद्यताम्।**

उ०—तपरसूत्रे तः परो यस्मादिति पञ्चम्यर्थे बहुव्रीहिसमासाश्रयणे 'अतो भिस ऐस्' इत्यादौ अत इति तपरोच्चारणमेव प्रमाणम्, तद्धि 'रमाभि'रित्यादौ दीर्घान्ते भिस ऐस्वारणार्थमेव कृतम्, तच्च तपरशब्दे बहुव्रीहिमन्तरा नोपपद्यते, एवं तात्परस्तपर इति पञ्चमीतत्पुरुषाश्रयणे 'सहिवहोरोदवर्णस्य' इति सूत्रे वर्णग्रहणमेव प्रमाणम्, अन्यथा ( तपरपदे पञ्चमीतत्पुरुषानाश्रयणे ) वर्णग्रहणमन्तराऽपि ह्रस्वाकारेणापि ग्रहणकशास्त्रबलाद् दीर्घाकारादीनामपि ग्रहणसम्भवेन 'उदवोढाम्' इत्यादौ वृद्धेरनन्तरमपि ओत्वप्रवृत्तेः सौलभ्येन वर्णग्रहणस्य वैयर्थ्यं स्पष्टमेव। कृतेन तेनैव वर्णग्रहणेन तपरपदे पञ्चमीतत्पुरुषज्ञापनद्वारा दीर्घाकारादौ तपरसूत्रप्रवृत्तिप्रयुक्तौत्वाप्रवृत्त्या उक्तप्रयोगसिद्ध्यर्थं सहिवहोरिति सूत्रे तपरसूत्राप्रवृत्तये वर्णग्रहणस्यावश्यकत्वात्। कृते च वर्णग्रहणे तत्सामर्थ्यात् अत्वजात्यवच्छिन्नसर्ववर्णग्रहणबोधनेन तपरसूत्राप्रवृत्तिरिति भावः। आद्योदाहरणम्—अतो भिस ऐस्' इति। अन्त्योदाहरणम्—'वृद्धिरादैजिति। इदञ्च सूत्रं विध्यर्थमिति वार्तिककारमतम्। अणुदितिसूत्रादण्ग्रहणस्याननुवृत्तत्वेन 'वृद्धिरादैच्' इत्यादौ दीर्घाकारांशेऽनणि गुणानां भेदकत्वपक्षे पण्णां ग्रहणस्य केनापि सूत्रेणाप्राप्तत्वात् 'विधिरत्यन्तमप्राप्तौ' इति रीत्या विधित्वस्याक्षतत्वात्। अण्ग्रहणानुवृत्तौ तु अण्येवास्यापि प्रवृत्त्याऽणुदित्सूत्रेणैवास्य कार्यस्य सम्पादितत्वेन विध्यर्थत्वं नोपपद्येत। जातिपक्षे तु नियमार्थमेवैतत्सूत्रमिति भाष्यकारमतम्। सवर्णग्रहणस्यानुवृत्तत्वात्। तथा च 'तपरः सवर्णस्य चेत्सर्वस्य जात्या-

श्रयतया ग्राहकस्तर्हि समकालस्यैव, नान्यस्य' इति नियमात् यद्व्यक्तिमादाय जातिनिर्देशस्तद्भिन्नकालव्यक्तिगतजातेरग्रह इति फलति। एवं विधनियमः सवर्णग्रहणानुवृत्तिमन्तरा न सम्भवतीति नियमपक्षे सवर्णग्रहणानुवृत्तेः परमावश्यकत्वं प्रतीयते। अन्यथा स्वसमकालानां भिन्नजातीयानामिकारादीनां ग्रहणेन विध्यर्थतया नियमार्थत्वानुपपत्तिः स्यात्। एतावता यद्यपि सवर्णग्रहणानुवृत्तिविधिपक्षेऽपि सम्भवति तथापि नियमपक्षस्तां विना नैव सम्भवतीत्यभिप्रायेण तदनुवृत्तिः पक्षेऽस्मिन्नुक्तेति भावः। न च जातिपक्षेऽपि गुणानां भेदकत्वेन व्यक्त्यन्तराणामग्रहणात् नियमार्थत्वं दुर्घटमिति वाच्यम्? 'गुणा अभेदकाः' इति गुणानामभेदकत्वपक्षस्यैव भाष्यकारादिसिद्धान्तसिद्धत्वेन जातिव्यक्त्युभयोरपि पक्षयोर्नियमार्थताया अक्षतत्वात्।

**१४ प्र०—वृद्धिरादैजित्यत्र तपरकरणप्रयोजनं सम्यग् विविच्य संज्ञासूत्राणां नियमार्थत्वं निराकृत्य च विध्यर्थत्वमविकलमुपपादयत।**

उ०—नन्वाकारस्याण्त्वाभावेन तेनान्येषां ग्रहणाभावस्य स्वभावसिद्धत्वात् 'आत्' इत्यत्र तपरत्वमनावश्यकमेवेति चेदत्रोच्यते–'अस्थि दधि' इत्यत्रोदात्तग्रहणेन गुणानामभेदकत्वरूपभाष्योक्तसिद्धान्तपक्षानुसारं समकालसवर्णग्रहणार्थत्वाभावस्योक्ततया तपरत्वस्य सन्देहनिराकरणद्वारा पूर्वार्थत्वेन चारितार्थ्यात्। 'कृष्णौत्कण्ठयम्' 'गङ्गौघः' इत्यादौ त्रिमात्रचतुर्मात्रादेशव्यावृत्तये परार्थतया वक्तुं शक्यत्वाच्च। न च त्रिमात्रचतुर्मात्रादेशव्यावृत्तये यत्परार्थत्वमुच्यते तद् यथोद्देशपक्ष एव संभवति, न तु कार्यकालपक्षे तदा हि (यथोद्देशपक्षे हि) स्वदेशे वाक्यार्थबोधात्, अविधेयाण्त्वेन सवर्णग्रहणसंभवात्। कार्यकालपक्षे तु विध्येकवाक्यतयैव वाक्यार्थबोधस्य जायमानत्वेन विधेयाण्त्वेन सवर्णग्रहणासंभवादिति वाच्यम्? कार्यकालपक्षेऽपि 'मृजेर्वृद्धिः' इत्यादौ वृद्धिपदार्थजिज्ञासायां 'वृद्धिरादैच्' इत्युपस्थित्या तदर्थबोधरूपे शक्तिग्रहे सम्पन्ने सत्येव वाक्यैकवाक्यतयैव विधिवाक्यार्थबोधसंभवात्। 'ष्यङः सम्प्रसारणम्' 'ईदूदेद्द्विवचनम्' इत्यादिसूत्रस्थभाष्यपर्यालोचनयाऽपि विधिवाक्येन सह वाक्यैकवाक्यत्वेऽपि वस्तुतो भिन्नवाक्यताया एव लाभावगमात्। 'सर्वे सर्वार्थवाचकाः' इति रीत्या वृद्ध्यादिसंज्ञापदैरादैजादीनां बोधसंभवेन संज्ञासूत्राणां प्राचोक्तं नियमार्थत्वन्तु न सम्भवति तादृशनियमसत्वेऽपि गृहीतस्यैव वाचकत्वस्य बोधजनकतया प्रागज्ञातशक्तेर्ज्ञापकत्वस्य संज्ञासूत्राणां सत्वेनापूर्वबोधकत्वरूपविध्यर्थत्वस्यैव तेषां वक्तुमौचित्यात्। अपि च सर्वेषां शब्दानां सर्वार्थवाचकत्वं योगिन एवावगन्तुं प्रभवन्ति नास्मदादृशाः तत्तच्छब्दानां विशिष्य सर्वार्थबोधकत्वस्यासम्भ-

वात्। तथा हि अस्माकं यदर्थत्वसामान्येनार्थबोधजनकत्वज्ञानं वर्तते, तत्तु न तत्तद्रूपेण बोधजनकम्, शास्त्रस्य चास्मदाद्युद्देशेनैव विधानात्। नचैवं संज्ञास्वनित्यत्वव्यवहारः कथं भवतीति वाच्यम्? एतदुपदेशात्मकसङ्केतात्प्राक् संज्ञात्वस्य बोधाभावेनानित्यत्वव्यवहारस्योपपादयितुं शक्यत्वात् अत एव 'बहुगणवतु:' इति सूत्रभाष्ये 'कृत्रिमाकृत्रिमयोः' इति न्यायमूलकस्तत्तत्संज्ञाकरणरूपप्रकरणात् 'अन्योऽर्थो न ग्राह्य एवेति नियमोऽभिहितः। न च 'व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित्' इत्यादिना संज्ञासूत्राणां नियमत्वव्यवहारः कृतः स एषां विधित्वे कथं सङ्गच्छेतेति वाच्यम्? सङ्केतग्राहके कृते तत्तत्सङ्केतज्ञानरूपप्रकरणवशात्तस्यैवार्थस्योपस्थितिर्नान्यस्य इति रीत्या फलितार्थपरमेव नियममादाय तथा व्यवहारोपपत्तेः। वस्तुतस्तु संज्ञासूत्राणां विधित्वपक्ष एव ज्यायानिति बोध्यम्' नचैवमपि सूत्रे उद्देश्यविधेयवाचकपदयोः कतरच्छब्दपरं कतरच्चार्थपरमिति चेदत्रोच्यते—वृद्धिशब्दस्य शब्दशास्त्रेऽर्थपरकत्वासंभवेन शब्दपरकत्वं बोध्यम्। 'आदैच्' इत्यस्य शब्दस्य प्रत्याहारघटितत्वात् शब्दपरकत्वासम्भवेनार्थपरकत्वमवसेयम्। एवञ्च शाब्दिकनये शब्दार्थयोर्भेदाभेदघटिततादात्म्यस्वीकारेण 'वृद्धिपदाभिन्ना आदैच्पदार्थाः' इति फलितम्। अत एव 'रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनः' इति शब्दार्थयोरभेदप्रतिपत्तिजनिकोक्तिरपि संगच्छते। अन्यथा दशरथापत्यरूपरामार्थस्य पिनाकिनः शिवस्य मानभङ्गजनकत्वसम्भवेऽपि रामेति द्व्यक्षरस्य मानभङ्गजनकत्वासंभवेन तादृशवाक्यस्यासामञ्जस्यापत्तेः। नचोद्देश्यमनुद्दिश्य न विधेयमुदीरयेत्' इति नियमात् विधेयवाचकवृद्धिपदस्य प्रथमोपादानं नोचितमिति वाच्यम्? तथा नियमसत्त्वेऽपि प्रकृतसूत्रस्य ग्रन्थादावुपात्तत्वेन 'मङ्गलादीनि शास्त्राणि प्रथन्ते' इति दृष्ट्या मङ्गलार्थतयैव पाणिनिना प्रथमोपात्तत्वेन दोषाभावात्। तदुक्तं भाष्ये—'तदेष आचार्यस्य मङ्गलार्थ'मृष्यताम् इति। न चैवम् 'अपृक्त एकाल्' इत्यत्र तथोपादानमनुचितमेवेति वाच्यम्? विधेयस्य प्रथमोपादानेऽसाधुत्वभ्रमनिरासार्थं तदुपादानात्।

**१५ प्र०—न वेत्यादिसंज्ञासूत्रस्य प्रयोजनं विशदं निगद्य भाष्यकृता कथं तत्प्रत्याख्यातमित्युपवर्ण्य 'जातिव्यक्तिपक्षयोरुभयोरपि सूत्रम्प्रत्याचख्यु'रिति पङ्क्तेराशयः स्फुटीक्रियताम्।**

उ०—अयं भावः—'विभाषोपपदेने'त्यादिप्राप्तविभाषाया भावांशस्य सिद्धत्वात् निवृत्तिमात्रफलकत्वेन 'विभाषोर्णो'रित्याद्यप्राप्तविभाषायाश्चाभावांशस्य सिद्धत्वात् विधिमात्रार्थकत्वेन तत्र तत्रोपयोगाभावात् 'विभाषाश्वे'रित्यादिप्राप्ताप्राप्त-

विभाषास्वेव 'न वेति विभाषे'ति संज्ञासूत्रस्योपयोगः। एतदभावे हि तत्र विधिमुखेन प्रवृत्त्यङ्गीकारे पित्सु सिद्धेऽपि विकल्पे कित्सु यजादित्वान्नित्यमेव सम्प्रसारणं स्यात्। निषेधमुखेन प्रवृत्तेरङ्गीकारे तु कित्सु प्रवृत्तावपि पूर्वेणाप्राप्तत्वात् पित्सु भावस्यैव विधीयमानत्वेनाप्रवृत्त्या विकल्पेन सम्प्रसारणं न सिद्ध्येत्। न च कित्सु निषेधमुखेन पित्सु विधिमुखेन प्रवृत्त्यभ्युपगमे न काऽपि क्षतिरिति वाच्यम्, एकवाक्येन भिन्नरूपयोर्विधिनिषेधयोर्विधातुमशक्यत्वात्। 'न वेति विभाषे'ति संज्ञासूत्राङ्गीकारे तु श्रुतक्रमानुरोधात् पूर्वं कित्सु सम्प्रसारणाभावं विधायानन्तरं लिट्त्वेन कित्पिदुभयत्रापि प्रापिते सति पक्षे सम्प्रसारणं विधीयत इति विधिमुखेनैव विकल्पाभ्युपगमे न दोषलेशोऽपीति।

**भाष्यकृतस्तु**—अभ्यवपूर्वकस्य हृधातोर्भक्षणार्थत्वाद् विकारार्थकस्य विपूर्वककृधातोरकर्मकत्वाच्च 'गती'त्यादिना कर्मत्वे प्राप्तेऽर्थान्तरे चाप्राप्ते तदुभयरूपेण प्रवृत्त्यर्थं आरब्धे 'हृक्रोरन्यतरस्या'मित्यादौ विभाषापदाभावात् तत्संज्ञासूत्राप्रवृत्त्योभयरूपेण प्रवृत्त्यनुपपत्तिः। न च मध्यमणिन्यायेनेति शब्दस्य 'विभाषा' इत्यत्रापि सम्बन्धाद् विभाषापदार्थः संज्ञेत्यर्थे जाते तस्य 'हृक्रो'रित्यादावपि सत्त्वेन न काऽप्यनुपपत्तिरिति वाच्यम्, उच्चारितस्यैव प्रत्यायकत्वनियमेनार्थे संज्ञात्वस्य क्वाप्यदृष्टत्वात्। विभाषापदार्थवाचकः संज्ञेत्यर्थादन्यतरस्यामित्यस्यापि तथात्वेन निषेधविकल्पयोः संज्ञात्वं विधायानुपपत्तिस्तु न वारयितुं शक्या, 'अनाकृतिः संज्ञे'ति भाष्येणैकस्यार्थस्य समानफलकानेकसंज्ञाकरणस्यायुक्तत्वात्। एवञ्च 'हृक्रोरन्यतरस्या'मित्यादौ लक्ष्यानुरोधेनैवोभयमुखेन प्रवृत्तिरिति विभाषापदघटितेऽपि तथैव प्रवृत्तिमङ्गीकृत्य तुल्यन्यायाज्जातिव्यक्तिपक्षयोरुभयोरपि सूत्रम्प्रत्याचख्युः।

**व्यक्तिपक्षे**—प्रतिलक्ष्यं लक्षणोपप्लवात् 'विभाषाश्वे'रित्यादौ पित्सु विधिमुखेन प्रवृत्तिः कित्सु निषेधमुखेनेति 'न वेति विभाषे'ति सूत्रमनावश्यकम्। **जातिपक्षे तु**—क्वचिदेकरूपेण प्रवृत्तावपि सूत्रस्य चारितार्थ्येन सार्थक्यसम्भवादावृत्तिमन्तरोभयमुखेन प्रवृत्त्यनुपपत्तेः संज्ञासूत्रं सार्थकमिति 'अशिष्यो वा विदितत्वा'दिति भाष्याशयं वर्णयतः कैयटस्य वचनं न समीचीनमिति सूचयितुमाह—**जातिव्यक्तिपक्षयोरित्यादि।**

**अयं भावः**—हृक्रोरित्याद्यनुरोधेन जातिपक्षेऽपि वाक्यभेदेनोभयमुखेन प्रवृत्तेरावश्यकतया विभाषापदघटितेऽपि तथैवेष्टसिद्धिः। किञ्च संग्राहकवाक्ये यदि निषेधमुखेन प्रवृत्तिस्तर्हि—उपप्लुतवाक्येऽपि निषेधमुखेनैव प्रवृत्तिः स्यात्। संग्रा-

हृकवाक्ये यदि विधिमुखेन प्रवृत्तिस्तर्हि-उपप्लुतवाक्येऽपि विधिमुखेनैव प्रवृत्तिः स्यादिति व्यक्तिपक्षेऽपि लक्ष्यानुरोधेनैवोभयमुखेन प्रवृत्तिरिति वाक्यभेदभियोभयपक्ष एव प्रत्याख्यानं भाष्यतो लभ्यत इति दिक् ॥

**१६ प्र०—स्वं रूपमिति सूत्रस्य नियमाकारप्रदर्शनमुखेन नियमत्वमुपपाद्याशब्दसंज्ञेत्यत्र विवक्षितसमासं प्रदर्श्य भाष्यकृता कथं सम्पूर्णसूत्रं प्रत्याख्यातमिति सयुक्तिकं सफलञ्च निरूच्यताम् ।**

**उ०—अयं भावः**-'राज्ञो यदि'त्यादौ लौकिकव्युत्पत्त्योपस्थितस्य मांसपिण्डविशिष्टराजपदार्थस्य प्रत्ययेन सह पूर्वापरीभावासंभवादधिकृतप्रातिपदिकादित्यनेनाभेदेनान्वयासम्भवाच्च, राजार्थकभूपप्रभृतिसकलशब्देभ्यो यत्प्रत्ययापत्तिवारणाय नियमार्थं सूत्रम्, अर्थे कार्यबाधे उपात्तशब्दबोध्यार्थवाचकग्रहणं यत्र प्रसक्तं तत्र तादृशार्थविशिष्टोपात्तस्यैव ग्रहणमिति । एवञ्च न भूपादिशब्देभ्यो यत्प्रत्ययापत्तिरिति ।

अशब्दसंज्ञेत्यत्र षष्ठीतत्पुरुषाश्रयणे कर्मसंज्ञादेः शब्दसंज्ञात्वाभावेन निषेधाप्रवृत्तौ 'कर्मण्यण्' इत्यादौ स्वरूपग्रहणापत्तिरतः सप्तमीतत्पुरुष एव, एवञ्च शब्दपदस्य शब्दशास्त्रपरत्वेन 'शब्दशास्त्रे या संज्ञा तत्र न स्वरूपग्रहणमि'त्यर्थे न कश्चिद्दोष इति ।

**भाष्यकृतस्तु**—'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते' इत्यभियुक्तोक्तेः शब्देऽर्थे च खण्डशक्तिस्वीकारेण पदेनैव पदपदार्थयोरुभयोरुपस्थितत्वाद् राज्ञ इत्यादौ राजन्पदजन्यबोधे 'स्वविषयकबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्याप्त्यधिकरणत्व'सम्बन्धावच्छिन्नप्रकारतया भासमानाद्राजन्शब्दादेव यत्प्रत्ययेनेष्टसिद्धौ न किमपि प्रयोजनं सूत्रस्य । अनर्थकस्य तदानुपूर्वीकस्य ग्रहणापत्तिस्तु नाशङ्कनीया, खण्डशक्त्योपस्थितार्थस्य त्यागे प्रमाणाभावेन तस्य विशेषणतयाऽन्वयसम्भवेन ततः सिद्धार्थवत्परिभाषाप्रवृत्तेः ।

एवञ्च 'ष्णान्ताषडि'ति करणेऽपि स्वरूपग्रहणेनैव षष्शब्दस्यापि संज्ञासिद्धौ षान्तस्य संज्ञाविधानेनैव शब्दशास्त्रे स्वरूपग्रहणाभावस्य ज्ञापनात् 'उपसर्गे घो'रित्यादावदोषेणाशब्दसंज्ञेत्यपि व्यर्थमेव । सूत्रस्याभावादेव 'विभाषावृक्ष' इति सूत्रविषये वृक्षादिषु विशेषाणां 'स्वे पुष' इत्यत्र पर्यायाणां, विशेषाणां, स्वरूपस्य च 'सभाराजे'त्यत्र पर्यायाणामेव ग्रहणं सिद्ध्यति । सूत्रसत्त्वे तु सर्वत्र स्वरूपग्रहणे प्रसक्तेप्रागुक्ताभीष्टसिद्ध्यर्थं गित्सिदित्यादिरूपभाष्योक्तयत्नविधाने नितरां गौरवम् । एवञ्चाशब्दसंज्ञेति करणे 'परेश्चघाङ्कयो'रित्यत्र घपदेन 'नदीपौर्णमासी'त्यत्र 'नदी'पदेन

च स्वरूपग्रहणं न सेत्स्यति। प्रत्याख्यानपक्षे तु लक्ष्यानुसारिव्याख्यानेन, ज्ञापकपक्षेऽपि ज्ञापकसिद्धस्यासार्वत्रिकत्वेन च न दोषसम्भावनाऽपीत्याहुरिति दिक्।

**१७ प्र०—येन विधिस्तदन्तस्येति सूत्रे येनेति तृतीयायाः पारतन्त्र्यलक्षकत्वं सप्रमाणं निराकृत्य सिद्धान्तार्थं सोपष्टम्भं प्रतिपादयन्तु।**

**उ०—अयं भावः** करणस्य कर्तृपरतन्त्रत्वनियमात् येनेति तृतीयया पारतन्त्र्यं लक्ष्यते, पारतन्त्र्यञ्च शब्दानां विशेषणत्वेनैव सम्भवतीति विशेषणमेव यत्पदेन लभ्यते, अर्थात् करणस्य कर्तृव्यापाराधीनव्यापारवत्त्वेन पारतन्त्र्यवद्, अभेदेन विशेषणतया विवक्षितस्यापि शब्दस्य विशेष्ये लिङ्गाद्यन्वयाधीनलिङ्गाद्यन्वयित्वेन पारतन्त्र्यात् विशेषणलाभः, तथा च यन्निष्ठपारतन्त्र्यप्रयोज्यविधेयकर्मकविधिः विधानं भवति तत् तदन्तस्य संज्ञा स्यादित्यर्थः पर्यवस्यति—इति यदाहुः भट्टोजिदीक्षितादयस्तन्न, सम्यग्, सुब्विभक्तौ न लक्षणा भवतीत्यस्य सर्वसम्मतत्वेन प्रकृते तृतीयाविभक्तौ लक्षणाया वक्तुमशक्यत्वात्। तत्र 'कर्तृकर्मणोः कृति' इति सूत्रारम्भस्यैव प्रमाणत्वात्। अन्यथा यदि सुब्विभक्तावपि लक्षणा स्यात्तदा तद्विषये 'शेषे षष्ठी' इति शेषे एव षष्ठीं विधाय लक्षणयैव कर्तृत्वकर्मत्वरूपेणापि बोधोपपत्तौ कर्तृकर्मणोरित्यस्य वैयर्थ्यापत्तिः स्यात्। किञ्च येषां प्रत्ययानामन्येषां वा शब्दानां यस्मिन्नर्थे शास्त्रेण विधानं कृतं तेषामन्यार्थे तदर्थे चान्येषां लक्षणया साधुत्वाभावस्य 'प्रत्ययः' 'पुंयोगात्' इत्यादिसूत्रस्थभाष्येण स्पष्टमेव प्रतिपादितत्वात्। एवञ्च न कथमपि तृतीयायाः पारतन्त्र्यलक्षकत्वं संभवतीति भावः। अपि तु येनेति करणे तृतीया, कर्तरि तु न संभवति, षष्ठ्या बाधापत्तेः, विधिरिति तु विधानं विधिरिति भावे किप्रत्ययान्तो बोध्यः। तथा च करणस्य व्यापारवत्त्वनियमात्, अन्येषाञ्च व्यापाराभावात् विशेषणमेवात्र करणतृतीयान्तेनोच्यते, तस्य चेतरव्यावृत्तिकरणमेव व्यापारः। कर्ता च प्रत्यासत्त्या शास्त्रकृत् पाणिनिराचार्य एव गृह्यते। कर्म चात्र विधेयम्। एवञ्च 'एरच्' इत्यत्र विशेषणस्य इकारस्य पाणिनिकर्तृकाच्प्रत्ययकर्मकविधानक्रियायां करणभूतस्याकारोकारादिव्यावृत्तिकरणमेव व्यापारः। तदुक्तं भाष्ये—'येनेति करणे एषा तृतीयाऽन्येन चान्यस्य विधिर्भवति। यथा चैत्रस्य संग्रामं हस्त्यश्वादिभिर्विधत्ते। एवम् 'अचो यत्' इति अचा धातोर्यतं विधत्ते' इति। अन्येन चान्यस्येत्यनेन यस्य कार्यं यस्मिन्परतश्च, तयोरकरणत्वं प्रदर्शितम्। तत्र शब्दजन्योपस्थितिविषयस्य विशेष्यस्य शब्दोपस्थितं विशेषणमेव तदन्तग्राहकं भवति। यथा 'पादः पत्' इत्यत्रोपात्तेन पाच्छब्देनाङ्गस्य विशेषणीभूतेन तदन्तविधिः।

  

क्वचित्तु सति गमके शब्दानुपस्थितं शब्दस्वरूपं विशेष्यमादायापि तदन्तविधिर्भवति यथा 'द्वन्द्वे च' इति ज्ञापकात् 'सर्वादीनि सर्वनामानि' इत्यत्र तदन्तविधिः। तच्च विशेषणमन्तरङ्गत्वात् समानाधिकरणमेव गृह्यते। परन्तु क्वचित् तदन्तविध्यन्तरं तथाविशेषणत्वयोग्यताप्येतत्प्रवृत्तौ निमित्तम्। अत एव 'इन्हन्पूषार्यम्णां शौ' इत्यत्र इन्नंशे तदन्तविधिः। अन्यथा इनः प्रत्ययत्वेनाङ्गत्वाभावात् अङ्गेन विशेष्यभूतेन सहाभेदेन विशेषणत्वाभावात् तदन्तविधिर्न स्यात्। तथा च अभेदसम्बन्धावच्छिन्न-प्रकारताप्रयोजकं यत् पदं, तदन्तविध्युत्तरं तादृशप्रकारताप्रयोजकत्वेन संभावितञ्च यत् पदं, तत् स्वबोध्यनिष्ठचरमावयवतानिरूपकसमुदायस्य संज्ञा स्यादिति प्रघट्टकार्थः सम्पन्नः।

**१८ प्र०—अवसानपदार्थं शङ्कासमाधानाभ्यां सुस्पष्टं निरुच्यावसानसंज्ञया संहितासञ्ज्ञायाः कथं न बाध इति सप्रमाणं विविच्यताम्।**

उ०—ननु यत्किञ्चिद्वर्णोच्चारणाभावस्यावसानपदार्थत्वे अश्व इत्यादाव-कारोच्चारणाभावस्यापि तथात्वेनावसानत्वापत्तौ 'अणोऽप्रगृह्यस्ये'त्यनेनानुनासिकापत्तिः, यावद्वर्णोच्चारणाभावस्य प्रलयकालीनवर्णोच्चारणातिरिक्तोच्चारणेऽसम्भवः। विवक्षितार्थबोधकवाक्यघटकवर्णोच्चारणाभावोऽपि न तत्त्वेनाभिप्रैतुं शक्यः, यत्रैकेन रामादित्युक्तम्, अपरेण तदनन्तरमर्द्धमात्रामध्य एव काले अनेनेत्युक्तं तत्रेष्टस्याप्य-वसानकार्यस्याप्राप्तेरिति चेन्न स्वविशिष्टक्षणवृत्तित्व, स्वप्रतियोगिकत्वोभयसम्बन्धेन वर्णोच्चारणविशिष्टस्यैवाभावस्य तत्त्वेन विवक्षितत्वात्। संसर्गघटकवैशिष्ट्यञ्च स्व-कर्तृकर्तृकोच्चारणानधिकरणत्व, स्वाधिकरणकालविशिष्टत्वोभयसम्बन्धेन, वै० स्वोत्तरत्व, स्वोत्तरार्धमात्राधिककालानुत्तरत्वोभयसम्बन्धेनेति।

ननु परस्य विद्यमानदशायां सावकाशा संहितासंज्ञाऽवसानसंज्ञया 'सत्यपि सम्भवे बाधनं भवती'त्येतदनुवादकाकडारसूत्रबलेन कथन्न बाध्यत इति चेन्न, अवसानकार्याणां संहिताधिकारे पाठेन 'आकडार' सूत्रस्य स्वशास्त्रीयसंज्ञामात्र-विषयत्वकल्पनया संहितावसानसंज्ञयोर्लोकेऽपि सत्त्वेन विरोधाभावेन बाध्यबाधक-भावाभावात्। तदेव 'संहितावसानयोर्लोकविदितत्वादि'ति वार्त्तिककारोऽप्यवादीदिति दिक्।

**१९ प्र०—'सुप्तिङन्तं पद'मिति सूत्रेऽन्तग्रहणप्रयोजनं सफलमुपपाद्य ज्ञापनानन्तरमपि तत्सार्थक्यं दर्शनीयम्।**

उ०—ननु 'प्रत्ययग्रहणे तदन्तग्रहणमि'त्युक्तेः शब्दस्वरूपं विशेष्यमादाय

तदन्तविधौ सुबन्ततिङन्तयोः पदसंज्ञासिद्धौ तदर्थं कृतमन्तग्रहणं व्यर्थमेवेति चेन्न, 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति परिभाषाज्ञापनार्थत्वात् तेन तरप्तमपोरेव घसंज्ञया 'गौरी ब्राह्मणितरे'त्यत्र गौरीशब्दस्य ह्रस्वत्वन्न, न च घसंज्ञायां तदन्तविध्यभावेऽपि प्रदेशेषु तदन्तविधौ बाधाभावेन पुनरपि ह्रस्वत्वं स्यादेवेति वाच्यम्, 'संज्ञाविधावि'ति निषेधसामर्थ्येन प्रदेशेष्वपि तदन्तविध्यभावात्। न च ज्ञापितेऽपि पदप्रदेशे प्रत्ययग्रहणे तदन्तग्रहणेनैव सिद्धेऽन्तग्रहणं व्यर्थमेवेति वाच्यम्, 'स्वादिषु' इत्यनेन केवलस्य प्रकृतेरपि पदसंज्ञाविधानेन तत्र प्रत्ययग्रहणस्यैवाभावात्।

न चान्तग्रहणेन सुबन्तं यत्तदादितदन्तमित्यर्थबोधनेन पदसमुदायस्य पदत्वार्थमेवान्तग्रहणमिति ज्ञापकं भवितुं नार्हतीति वाच्यम्, 'यस्मात्प्रत्ययविधि'रित्याद्यनुवृत्तेः समुदायस्य पदत्वासम्भवादिति दिक्।

**२० प्र०—प्रत्येकं संयोगसंज्ञापक्षं युक्तिभिर्निरस्य द्वयोः संयोगसंज्ञामुपपाद्य च बहूनां समवाये बहूनामेव संयोगसंज्ञा, द्वयोर्वा इत्यत्र सोपपत्तिकं सप्रयोजनञ्च सिद्धान्तपक्षमाविष्कुरुत।**

उ०—नन्वज्भिर्व्यवधानशून्यत्वे हलां संयोगसंज्ञायां ब्राह्मणशतभोजनन्यायेन प्रत्येकं तत्संज्ञया 'सुहृत्प्रसादः' इत्यादौ संयोगान्तलोपः स्यादिति चेन्न, गर्गशतदण्डनन्यायेन समुदायस्यैव संयोगसंज्ञाविधानेनादोषात्। यत्तु 'संयुज्यन्ते वर्णा यत्रे'त्येवं यौगिकव्युत्पत्तिबलाच्च प्रत्येकं संयोगसंज्ञेत्याहुस्तन्न, 'घटपटौ संयुज्यते यत्र' इत्यादौ संयुज्यमानघटपटाद्यतिरिक्तस्यैवान्यपदार्थस्य प्राधान्येन प्रतीत्या 'संयुज्यन्ते वर्णा यत्र' इति विग्रहेऽपि संयुज्यमानहलतिरिक्तहल्घटितस्य पदस्य वाक्यस्यैव वा संयोगसंज्ञापत्तेः। न च 'शिक्षा' इत्यादौ द्वयोरेव व्यञ्जनयोः संयोगत्वाभिमतयोः सत्वेन 'हलोऽनन्तराः' इत्यत्र बहुवचनबलात् प्रतीयमानानां बहूनामेव हलां संयोगसंज्ञाप्राप्त्या प्रकृते तदभावेन संज्ञाया अप्रवृत्तौ 'गुरोश्च हलः' इति अप्रत्ययो न स्यादिति वाच्यम्? 'हलौ च हलश्च' इति हल इत्येवमेकशेषकरणाद् द्वयोरपि संयोगसंज्ञाप्राप्त्योक्तदोषाभावात्। न च यत्राधिका हलः सन्ति तत्र द्वयोस्त्रयाणाञ्च समुदायस्यैव विनिगमनाविरहात् संज्ञाप्राप्तौ कतरो हि पक्षस्तत्र समुचित इति वाच्यम्? बहूनां संज्ञाविधाने प्रयोजनाभावात् बहूनां समवायेऽपि द्वयोर्द्वयोरेव संज्ञाविधानौचित्यात्। अत एव (बहूनां समवायेऽपि द्वयोर्द्वयोः संज्ञाया इष्टत्वादेव) भूयास्तामित्यादौ 'स्कोः संयोगाद्योरन्ते च' इति सलोप संयोगादिलोपः समुप-

पद्यते। इतरथा झल्सहितस्य 'स् स् त्' इति समुदायस्यैव संज्ञालाभे झलिपरे पूर्वयोः संयोगसंज्ञाविरहेण संयोगादिलोपो दुर्लभः स्यादिति दिक्।

## अथ परिभाषाप्रकरणम् ॥ २ ॥

**२१ प्र०—इको गुणवृद्धी'ति सूत्रस्य सयुक्तिकस्परिभाषात्वमुपपाद्य-एतद्विषये लक्षणप्रतिपदोक्तपरिभाषया कथन्नेष्टसिद्धिरिति विचार्य, अत्रत्यं निर्दुष्टं प्रतिपदोक्तत्वं परिष्कृत्य 'तपर' सूत्रस्याभिमतं विध्यर्थत्वं नियमार्थत्वं वा संस्थाप्यताम्।**

उ०—इको गुणवृद्धीति न संज्ञा, समानविभक्त्यन्तत्वाभावात्। संज्ञयोः पूर्वं विहितत्वाच्च। नापि विधिः 'ओर्गुणः' इत्यादेर्वैयर्थ्यापत्तेः। नापि नियमः, अन्येरगतार्थत्वात्, वाक्यभेदापत्तेश्च। नाप्यतिदेशः, असम्भवात्। नाप्यधिकारः, तथा सति 'इको गुणवृद्धी' 'न धातु' इति योगविभागवैयर्थ्यात्। नापि निषेधः, नञाऽघटितत्वात्। एवञ्च निरुक्तेष्वनन्तर्भूतत्वात् 'नापि तच्छेषो नापि तदपवादः, अन्यदेवेदं परिभाषान्तरमसम्बद्धमनया परिभाषये'ति प्रकृतसूत्रस्थभाष्याच्च परिभाषेयमिति सिद्धमिति।

नन्विह गुणवृद्धिपदानुवृत्तौ तत्र 'लक्षणप्रतिपदोक्त'परिभाषया प्रतिपदोक्तयोरेव तयोर्ग्रहणे प्रसक्ते 'त्यदादीनाम' इत्यादौ दोषाभावेन प्रकृतसूत्रे गुणवृद्धिग्रहणं व्यर्थमिति चेन्न, तत्र प्रतिपदोक्तपदेन 'उच्चार्यमाणवृत्तिधर्मेण साक्षादवच्छिन्नविधेयताश्रयस्य' यत्किञ्चिच्छास्त्रीयोद्देश्यतावच्छेदकज्ञानसम्पादकत्वेनोपयुज्यमाना याऽऽनुपूर्वीतदवच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयस्यैव च ग्रहणेन प्रकृते तयोः निर्वाहाऽसम्भवात्।

**प्रतिपदोक्तत्वञ्च**—यत्र शास्त्रे प्रतिपदोक्तपरिभाषा सञ्चारणीया तच्छास्त्रबोधोपयोगिनी याऽऽनुपूर्वी तद्विशिष्टत्वम्। वैशिष्ट्यञ्च स्वेन साक्षादवच्छिन्नविधेयताश्रयत्व, स्वप्रकारकज्ञानप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन।

प्रथमसम्बन्धदानात् 'घुमास्थे'ति सूत्रे 'पा पाने' इत्यस्यैव ग्रहणम्, नतु 'पै शोषणे' इति कृतात्वस्य। द्वितीयसम्बन्धदानात् 'विभाषादिक्समास' इत्यत्र 'दिङ्नामान्यन्तराल' इति विहितसमासस्यैव ग्रहणे नतु तदन्यस्येति दिक्।

**२२ प्र०—तस्मिन्निती'त्यादिसूत्रे सप्तम्या इतेश्च प्रयोजनं विलिख्य सूत्रस्यार्थप्रदर्शनपुरस्सरं नियमत्वमुपपाद्य वाक्यार्थे—उपश्लिष्टस्येत्यर्थ उपपत्तिं दर्शयत।**

उ०—ननु तच्छब्दस्य बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्ने शक्ते-रभ्युपगमे तेनैव सप्तम्यन्तपदरूपार्थस्योपस्थितौ तस्मिन्नित्यत्र सप्तमीनिर्देशोऽनुपपन्न इति चेन्न, सप्तम्यन्ता एव तच्छब्दार्था इत्यत्र तात्पर्यग्राहितया तदुपयोगात्। इति शब्दस्तु तच्छब्दस्य सप्तम्यन्तपदार्थपरत्वं बोधयति। अन्यथा तच्छब्दस्य सप्तम्यन्तपदवाचकत्वेन तदव्यवहितोच्चरितस्य कार्यिणोऽसम्भवेनानुपपत्तिप्रसङ्गः स्यात्। एवञ्च अव्यवहितोच्चारितसप्तम्यन्तार्थनिरूपितोपश्लेषविशिष्टस्य प्रसक्तं यत्कार्यं तत्पूर्वस्य भवतीत्यर्थो निष्पन्नः।

न चैतस्य सूत्रस्यौपश्लेषिकाधिकरणबोधकस्थले प्रवृत्त्यङ्गीकारे किं बीजमिति वाच्यम्, उपश्लिष्टपदाध्याहारेण 'उपपदविभक्तेः कारकविभक्तिर्बलीयसीति न्यायबलात् निर्दिष्ट इत्यत्रौपश्लेषिकाधिकरणे सप्तम्युपपत्तेः। 'स्नुक्रमो' रिति सूत्रे कैयटोऽपि 'तस्मिन्निति परिभाषायां सत्यां सत्सप्तम्याश्रयणमशक्यमित्याह—तत्रोपश्लेषः पूर्वस्येव परस्याव्यवहितस्येव व्यवहितस्य चेति पूर्वस्यैवेति, अव्यवहितस्यैवेति च नियमार्थमिदम्। ननु 'पतिः समास एवे' त्यादीनां साक्षाल्लक्ष्यसंस्कारकाणां नियम्यनियामकभावसम्भवेऽपि विधिना सहैकवाक्यमन्तरा लक्ष्यसंस्कारकत्वाभावात्परिभाषाणां नियम्यनियामकभावो न समीचीन इति चेन्न, यदि परिभाषासूत्रं न स्यात्तदा व्यवहितादावपि प्रवृत्तिः स्यादित्यार्थिकव्यवहारादिति दिक्।

## अथ स्वरसन्धिप्रकरणम् ॥ ३ ॥

**२३ प्र०—अनल्विधावित्यत्र पर्युदासप्रसज्यप्रतिषेधयोर्युक्ततरं पक्षं सार्थमुपपाद्य विधिग्रहणस्य फलं साधु निगद्य प्राचीननवीनमतभेदेनानल्विधावित्यस्य पदकृत्यप्रदर्शनपुरस्सरमर्थो निरुच्यतां फलदर्शनमुखेन।**

उ०—प्रसज्यप्रतिषेधे वाक्यभेदासमर्थसमासक्रियाध्याहारादिविधाने गौरवमनुसन्दधानोऽङ्गीकुर्वाणश्च पर्युदासपक्षे पक्षपातं 'स्थानिसम्बन्ध्यल्वृत्तिधर्मभिन्नधर्माश्रयविधौ स्थानिवद्भाव इत्यर्थे व्यूढोरस्केनेत्यादौ स्थान्यल्वृत्यट्त्वधर्मभिन्ननत्वादिधर्माश्रये णत्वादिविधौ स्थानिवत्त्वापत्तिं समुद्भाव्य 'स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रयविधिभिन्नविधौ स्थानिवद्भाव' इत्यर्थेन निखिलं दोषनिवहं वारयतीति पर्युदासपक्ष एव संमत इति।

अनल्विधावित्यत्र विधिग्रहणाभावेऽल्त्वव्याप्यधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधावेव निषेधो भविष्यति न त्वन्यत्रेति सकलसमासलाभार्थं विधिग्रहणम्। कृते

च तस्मिन् 'स्वनृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकत्व-स्ववृत्त्यतिदिदिक्षितात्त्वव्याप्यधर्मघटितधर्मनिमित्तकत्वैतदन्यतरसम्बन्धेन 'अल्विशिष्टविधा'वित्यर्थाद् यत्र विधावल्त्वव्याप्यधर्मेण स्थानिस्थान्यवयवाल्वृत्तिधर्मवतस्तेन तस्मात् तस्मिंस्तदादेरित्यादिक्रमेण विशेष्यतया विशेषणतया वाऽलाश्रयणं तत्र निषेध इत्यर्थ उपपद्यते, इति ।

**अत्र प्राचीनाः**—स्थानिसम्बन्ध्यल्वृत्तिधर्माश्रयविधौ न स्थानिवदित्यनल्विधावित्यस्यार्थः । नन्वेवं रामायेत्यत्र दीर्घानापत्तिः, स्थानी एकारस्तत्सम्बन्धी योऽल् व्यपदेशिवद्भावेन स एव, तद्वृत्तिधर्मः सुप्त्वं तदाश्रयत्वाद्दीर्घे कर्त्तव्ये स्थानिवत्त्वनिषेधादिति वाच्यम्, अल्वृत्तिधर्मेऽल्त्वव्याप्यत्वस्य विशेषणेनादोषात् । न च बभूविवेत्यादौ स्थानी यो वस्, तत्सम्बन्ध्यल्वकारस्तद्वृत्तिर्धर्मो वल्त्वं तदाश्रयत्वादित्वे कर्त्तव्ये स्थानिवत्त्वाप्रवृत्तेरार्धधातुकत्वाभावेनेडनापत्तिरिति वाच्यम्' स्थानिसम्बन्ध्यल्वृत्त्यल्त्वव्याप्यो यो धर्मस्तद्घटितो योऽतिदिदिक्षितो धर्मस्तदाश्रये विधौ न स्थानिवदित्यर्थेनातिदेष्टव्यार्धधातुकत्वे अल्त्वव्याप्यधर्मघटितत्वाभावेनादोषात् । एवञ्च प्रदीव्येत्यत्र स्थानिवद्भावनिषेधादिडागमाभावः फलमित्याहुः ।

**नवीनास्तु**—स्थानिभूतो योऽल्तद्वृत्तिधर्माश्रये आदेशस्य विधौ कर्त्तव्ये स्थानिवद्भावो न भवतीत्यनल्विधावित्यस्यार्थः । एवञ्च 'धिन्वन्तीत्यत्रेड्विधेः स्थानिभूतालुकारवृत्त्यार्धधातुकत्वाश्रयेन स्थानिवत्वाप्रवृत्तौ यणि सति नार्धधातुकत्वमादायेटः प्रसक्तिरिति फलम् ।

नन्वेतदर्थाङ्गीकारे रामायेत्यादौ दीर्घविधेः स्थानिभूतालेकारवृत्तिसुप्त्वाश्रयत्वेन तत्र कर्त्तव्येऽनल्विधाविति निषेधाद्दीर्घो न प्राप्नोतीति चेन्न, स्थानिशब्दस्य सम्बन्धिशब्दत्वेन तत एवादेशलाभे पुनरादेशपदोपादानेन स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वावगमात् स्थानिभूताल्वृत्त्यल्त्वव्याप्यधर्मावच्छिन्नस्थानितासमानाधिकरणधर्माश्रयविधौ नेत्यर्थेन रामायेत्यत्र स्थानषष्ठीप्रकृत्यर्थतावच्छेदकस्यैव स्थानितावच्छेदकताया भाष्यतो लाभाञ्चेत्वस्यैव स्थानितावच्छेदकत्वेन तस्याल्त्वव्याप्यत्वाभावात् । नचैवमपि वाक्यसंस्कारपक्षे 'राम-ए-अत्रेत्यत्र याऽऽदेशस्थानिभूतो योऽल् एकारस्तद्वृत्तिर्योऽल्त्वव्याप्यो धर्म-एच्त्वं तद्धर्मावच्छिन्ना या 'एचोऽयवा' इति सूत्रीयैकारनिष्ठा स्थानिता तत्समानाधिकरणो धर्मः सुप्त्वं तदाश्रयो विधिः 'सुपिचे'ति दीर्घविधिस्तस्मिन्कर्त्तव्ये स्थानिवत्त्वं न स्यादिति वाच्यम्, 'स्थानिभूताल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकाऽऽरोपप्रकारी-

भूतधर्माश्रयविधौ न स्थानिवदि'त्यर्थेन—अल्त्वव्याप्यैत्त्वावच्छिन्नस्थानितानिरूपितादेशताया अयादेश एव 'सत्त्वेन तदाश्रयधर्मिक आरोपः 'अयादेश एत्ववानि' त्याकारकस्तत्प्रकारीभूतधर्मत्वस्य सुप्त्वेऽविद्यमानत्वेन क्षतिविरहात्।

नन्वेतदर्थस्वीकारे 'हल्ङ्याब्' इति सूत्रेऽतिखट्वादौ स्थानिवद्भावेनाप्त्वमादाय प्रसक्तस्य सुलोपस्य वारणाय दीर्घग्रहणस्यावश्यकत्वं दर्शयतः पाणिनेः अतिखट्वायेत्यत्र स्थानिवत्त्वाभावाय 'स्थानिवत्सूत्रे 'ङ्याब्ग्रहणेऽदीर्घ' इति सम्पादयतो वार्त्तिककारस्य तदुभयप्रत्याख्यानाय ङी ई आ आबिति प्रश्लेषयतः पतञ्जलेश्च विरोधः समापतति। तथा हि—अतिखट्वी निष्कौशाम्बिरित्यादौ 'गोस्त्रियो'रि'ति सूत्रेऽच्परिभाषोपस्थितेरल्त्वव्याप्याच्त्वावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिको य आरोपः 'ह्रस्व आप्त्ववान् ङीप्त्ववानि'त्याकारकस्तत्प्रकारीभूताप्त्वङीप्त्वधर्मावच्छिन्नोद्देश्यताके सुलोपादौ कर्त्तव्ये स्थानिवत्त्वाप्राप्तेर्निरुक्तयत्नत्रयाणां फलविरहादिति चेन्मैवम्, अल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताके विधौ न स्थानिवदित्यर्थेन हल्ङ्यादिलोपे ङीत्वाप्त्वयोरुद्देश्यतायाः परम्परयावच्छेदकत्वेन तत्र कर्त्तव्येऽनल्विधावित्यस्याप्राप्त्या दोषाभावात्। एवञ्चाव्ययसंज्ञायां कृत्त्वस्य सलोपे इट्त्वस्य चोद्देश्यतायाः परम्परयैवावच्छेदकत्वेन तत्र तत्राऽनल्विधावित्यस्याप्रवृत्त्या आधये, चिकीर्षवे, कुम्भकारेभ्यः, अग्रहीदि, त्यादौ प्रसक्तभाष्यवार्त्तिकादिविरोधोऽपि परिहरणीयः। नचैवं स्थानितायामल्त्वव्याप्यधर्मावच्छिन्नत्वनिवेशो न युक्तः, 'सुपि च'ेति दीर्घीयोद्देश्यतायाः सुप्त्वेन साक्षादनवच्छिन्नत्वान्निषेधाप्रवृत्त्या रामायेत्यादौ दीर्घसिद्धेरिति वाच्यम्, रमायामित्यादौ 'याडाप' इत्यनेन याडर्थं तदावश्यकत्वादित्याहुरिति दिक्।

**२४ प्र०—स्थानिवत्सूत्रविषये 'सामान्यातिदेशे विशेषानतिदेश' इति प्रवर्त्तते नवा? यदि न प्रवर्त्तते तत्र किम्प्रमाणम्? तण्डुलानित्यत्र कथं नलोपः प्राप्नोति? कथं वा स वार्यते? इत्येतत्सर्वं स्फुटमुपपाद्यताम्।**

उ०—स्थानिवत्सूत्रविषये 'सामान्यातिदेशे विशेषानतिदेश' इत्यस्याङ्गीकारे इडादेरपि क्त्वः सत्त्वाद्वलादित्वस्य क्त्वाविशेषधर्मत्वात् तत एवेष्टसिद्धौ विशेषणतयाऽलाश्रयो न स्थानिवदित्येतदर्थकानल्वित्येवोपपत्तौ विधीयमानं विधिग्रहणं नैरर्थक्यमासादयेत्। एवञ्च प्रदायेत्यादौ क्त्वाविशेषधर्मस्य कित्त्वस्यानतिदेशादेवे-

त्वाप्राप्तौ तद्वारणाय विहितं 'न ल्यपी'ति सूत्रं प्रकृतसूत्रविषये विशेषातिदेशं ज्ञापयत् । 'सामान्यातिदेशे' इत्यस्य प्रवृत्तिं वारयतीत्यवसेयम् ।

नन्वेवं सत्यपि विधिग्रहणसाफल्येऽनल्विधावित्यस्यानुबन्धकार्येऽपि प्रवृत्त्या क्त्विस्य विशेषणतयाऽल्विधित्वा'दनल्विधावि'ति निषेधादेवेत्ववारणसम्भवे पुनरपि 'न ल्यपी'ति व्यर्थमेवेति चेन्न, अनुबन्धानामनेकान्तत्वात्तत्रानल्विधाविति निषेधाप्रवृत्तेः एकान्तत्वेऽपि शिद्ग्रहणेन तेषामल्पदव्यवहाराभावाच्चेति ।

ननु तण्डुलानित्यत्र पूर्वं सवर्णदीर्घे कृते आसित्यादावादिवत्त्वेन प्रत्ययत्वं तत आनुमानिक आनादौ स्थानिवत्त्वेन प्रत्ययत्वं तदन्तत्वमार्थसमाजग्रस्तमिति रीत्या प्रत्ययान्तत्वेऽपि स्वतः प्रत्ययान्तभिन्नतया प्रातिपदिकसंज्ञायां नलोपापत्तिरिति चेन्न, 'अतिदिश्यमानधर्मविरुद्धस्वाश्रयकार्याभावस्यातिदेशस्वभावसिद्धत्वात्' प्रत्ययान्तत्वविरुद्धाप्रत्ययान्तत्वप्रयुक्तप्रातिपदिकसंज्ञाया अभावात् ।

न च 'अप्रत्यय' इत्यस्य पर्युदासत्वे प्रत्ययान्तभिन्नत्वस्य प्रातिपदिकसंज्ञाप्रयोजकत्वं तदभावप्रयुक्तस्य प्रातिपदिकसंज्ञाभावस्याशास्त्रीयत्वेन तत्प्रयोजकप्रत्ययान्तत्वबुद्धिसम्पादकः स्थानिवद्भावो भवितुं नार्हतीति वाच्यम् प्रत्ययान्तत्वप्रयुक्तप्रातिपदिकत्वाभावस्य शास्त्रतात्पर्याविषयत्वे प्रत्ययान्ते विधिनिषेधयोरभावादप्रत्यय इति विशेषणस्य वैयर्थ्येन 'वेः स्कन्देरनिष्ठायामि'ति पर्युदासेन च पर्युदासलभ्याशास्त्रीयेऽपि शास्त्रतात्पर्यविषये शास्त्रीयवदतिदेशबोधनादिति दिक् ।

**२५ प्र०—'अचः परस्मिन् पूर्वविधावि'ति सूत्रघटके पूर्वविधाविति पदे तन्त्रस्वीकारे फलप्रमाणे प्रदर्श्य मारयतीति प्रत्युदाहरणस्य युक्तायुक्तत्वविचारः करणीयः ।**

उ०—'अचः परस्मिन् पूर्वविधावि'ति सूत्रघटकपूर्वविधिशब्दे तन्त्राङ्गीकारे एकस्य 'पूर्वसम्बन्धिन्येव शास्त्रविधेये कर्त्तव्ये' इत्यर्थेन पूर्वपरयोर्विधौ स्थानिवद्भावाप्राप्त्या 'आरतुरि'त्यादौ 'ऋच्छत्यृतामि'ति सूत्रेण गुणे विहिते सवर्णदीर्घः सिद्ध्यति ।

अपरत्र विधिशब्दे भावे किः, तस्य भावार्थकस्य सम्बन्धसामान्यषष्ठ्यन्तपूर्वशब्देन समासे 'पूर्वसम्बन्धिभावे तत्स्थितौ स्थानिवदि'त्यर्थेन 'ऐनेय' इत्यादौ 'यस्येति चे'ति लोपस्य स्थानिवद्भावः सन्नियोगशिष्टन्यायप्राप्तनिवृत्तिं निवार्य नकारं स्थापयतीति फलम् । 'न पदान्त' सूत्रे पञ्चेन्द्राण्यो देवता अस्य 'पञ्चेन्द्रः' इति 'लुकि न स्थानिवदि'त्यस्योदाहरणं दर्शितम् । तत्र च पूर्वत्वेन

दृष्टस्य सम्बन्धिनः कस्यचिद्विधेयस्याभावात् स्थानिवत्वाप्राप्त्या तदुदाहरणदर्शनमसङ्गतमिति तदेव प्रस्तुतार्थद्वयं द्रढयतीति । एवञ्च 'अचः परस्मिन्नि'ति सूत्रेऽपि भाष्ये कर्मसाधनस्य विधिशब्दस्योपादाने न सर्वमिष्टं संगृहीतमिति भावसाधनो विज्ञास्यते, पूर्वस्य विधानं प्रति पूर्वस्य भावं प्रति स्थानिवदित्युक्तं, तदपि च निरुक्तार्थद्वये प्रमाणमिति दिक् ।

'नाग्लोपी'तिं सूत्रस्थागितिप्रत्याहारग्रहणस्य 'वृद्धेर्लोपो वलीयान्' इत्यर्थज्ञापकत्वकथनपरभाष्यादिदुदुपधेभ्यो णिचोऽनभिधानेन अच एवादेशः स्थानिवदित्यर्थे 'अचः परस्मिन्नि'त्यस्य मारयतीति प्रत्युदाहरणं न युक्तम् । तथा हि—इकारान्तादुकारान्ताच्च णिचि परत्वाद्वृद्धौ टिलोपे एकारौकारयोरेव लोपेनाग्लोपाभावान्न तत्र निषेधप्रवृत्तिः, अकारान्तादृकारान्तात् लृकारान्ताच्च णिचि वृद्धौ अकारलोप एव चेदलोपीत्येव सम्पादयितव्येऽगिति प्रत्याहारग्रहणं ज्ञापकं 'वृद्धेर्लोपो वलीयानि'ति । मरुदादिशब्दाण्णिचि तु वृद्धिगुणयोरप्राप्त्याऽगिति प्रत्याहाराश्रयणे निषेधः, अकारमात्रोक्तौ तु न निषेध इति फलभेदाद्भाष्योक्ताया 'वृद्धेर्लोप' इत्येतज्ज्ञापकताया भङ्गप्रसङ्ग इति ।

[ तदेवं मारयतीति प्रयोग एव न साधुरिति कुतोऽसौ प्रत्युदाहरणम् ]

न च स्रग्विणमाचष्टे स्रजयतीति भाष्यविरोधस्तत्रेदुपधादेव णिचोऽभिधानादिति वाच्यम्, विनो लुकि 'अङ्गवृत्तेरि'ति परिभाषया वृद्ध्यभावेन लुकि ह्रस्वतदभावयोर्विशेषाभावेन ततो णिच्यपि फलभेदाभावात् तद्भिन्नेदुपधादेव णिचोऽनभिधानकल्पनात् । एवञ्च सरोभवदादिप्रकृतिकणिचि टिलोपे सारयति भावयतीत्याद्येव प्रत्युदाहरणमिति जगद्गुरुमैथिलमिश्रा आहुरिति दिक् ।

**२६ प्र०—'न पदान्ते'त्यादिसूत्रघटकविधिशब्दस्य भावसाधनत्वे वाक्यसंस्कारपक्षपदसंस्कारपक्षयोरुभयोरपि वाचिके प्रस्तुतदोषनिवारणपुरस्सरं सुस्पष्टं फलं निरुच्य 'वेतस्वानि'त्यादौ रुत्वाभावहेतुं सम्पाद्य 'महिष्मानि'त्यत्र प्रकारान्तरेण प्रसक्तजश्त्वं वार्यताम् ।**

उ०—विधिशब्दस्य भावसाधनत्वाङ्गीकारे 'पदचरमावयवद्विर्वचनादिकर्मकविधानेन स्थानिवद्भाव' इत्यर्थे वाक्यसंस्कारपक्षे 'एषो यन् हसती'त्यत्र 'एतत्तदोरि'ति प्राप्तसुलोपं निवारयितुं प्रस्तुतस्थानिवद्भावो लोपस्य पदानवयवत्वेन पदान्तकर्मकविधिविरहान्न वार्यते 'न पदान्ते'ति सूत्रेण ।

कर्मसाधनत्वे तु—'पदान्तस्य स्थाने विधौ निषेध' इत्यर्थे लोपस्यापि

तत्त्वेन निषेधप्रवृत्त्या सुलोपो दुर्वार एव स्यात् । ननु पदसंस्कारपक्षे यन्निति रूप-सिद्ध्यनन्तरमेतच्छब्दसम्बन्धेन सोः स्थानिभूतादचः पूर्वत्वाभावेन 'अचः पर-स्मिन्नि'त्यस्य स्वत एवाप्रवृत्त्या नेदं भावसाधनस्य फलमिति चेन्न, षडङ्गुलिशब्दात् 'वह्वचो मनुष्यनाम्नष्ठज्वे'ति ठचि कृते 'ठाजादावूर्ध्वमि'ति ङ्गुलिशब्दस्य लोपे यस्येति लोपे षष्शब्दस्यान्तर्वर्त्तिविभक्त्या पदत्वेन सिद्धतया पदान्तताया अवि-धानान्नास्ति स्थानिवद्भावनिषेध इत्यकारस्य स्थानिवद्भावादकारान्तस्य भसंज्ञा, पदसंज्ञा त्वन्तर्वर्त्तिविभक्त्याश्रयेण षकारान्तस्येति षडिक इत्यत्र जश्त्वस्यैव फलत्वेन सम्भवात् ।

**कर्मसाधनत्वे तु**—षषः षकारस्य पदान्तत्वेन सिद्ध्या स्थानिवत्त्वनिषेधात्ष-कारान्तस्यैव भसंज्ञेति तुल्यावधिकया भसंज्ञया पदसंज्ञाया बाधनाज्जश्त्वासिद्धिः ।

नचैवं वागाशीश्शब्दाट्ठचि शीरित्यस्य निरुक्तदिशा लोपे यस्येति लोपे तस्य स्थानिवद्भावेन भत्वाभावेऽन्तर्वर्त्तिविभक्त्या पदत्वेन जश्त्वापत्तेर्वाचिको न सिद्ध्ये-दिति वाच्यम्, 'कर्त्तव्योऽत्र यत्न' इति भाष्येण 'एकाक्षरपूर्वपदानामुत्तरपदलोप' इत्यनेनाशीश्शब्दस्य लोपे तस्याजादेशत्वाभावेन स्थानिवद्भावाप्राप्तेरिति ।

ननु **भावसाधनविधिशब्दावलम्बे** वेतश्शब्दात्–'कुमुदनडवेतसेभ्यो ड्मतु-बि'ति ड्मतुपि टिलोपे 'स्वादिष्वि'ति पदसंज्ञायां पदान्तत्वं प्रतिपद्यमानस्य सका-रस्य पदान्तताया विधीयमानत्वात् स्थानिवत्त्वनिषेधाद्रुत्वप्रसङ्गः । तत्र सान्तस्य भत्वं तु नाशङ्कनीयम्, तत्र कर्त्तव्येऽल्लोपस्य स्थानिवत्त्वादिति चेन्न, पदे अन्तः पदान्त इति सप्तमीतत्पुरुषेण पदे परतोऽन्तकर्मकविधावित्यर्थेन पदपरत्वाभावेन निषेधाप्राप्तेः । नचैवमपि 'पूर्वत्रासिद्धीये न स्थानिवत्' इति स्थानिवत्त्वनिषेधान्नि-रुक्तदोषः समापतत्येवेति वाच्यम्, पदेऽन्त इत्यर्थेन तत्र स्थानिवत्त्ववारणपरभाष्य-प्रामाण्येन 'पूर्वत्रासिद्धे' इत्यत्र पदचरमावयवविधायकातिरिक्तत्वेन सङ्कोचात् ।

न च निरुक्तनिवेशो महिष्मानित्यत्र जश्त्ववारणेऽपि जश्त्वविधिम्प्रति 'न पदा-न्ते'त्यनेनैव स्थानिवत्त्वनिषेधाज्जश्त्वापत्तिरिति वाच्यम्, चरसाहचर्येण परनिमित्त-कस्य 'झलां जश् झशी'ति विहितस्यैव जश्त्वस्य तत्र ग्रहणात् । न चोभयत्रापि-रुत्वजश्त्वयोरन्तरङ्गयोः परनिमित्तकत्वेन वहिरङ्गस्य लोपस्यान्तरङ्गपरिभाषया-ऽसिद्धत्वेनोपपत्तौ पदेपरे–इत्यादिकल्पना न समीचीनेति वाच्यम्, कार्यकालपक्षे-ऽपि त्रिपाद्यामन्तरङ्गपरिभाषाया अप्रवृत्तेः प्रतिपादितत्वादिति दिक् ॥

**२७ प्र०—'न पदान्ते'ति सूत्रेण परम्परया पदचरमावयवसाध-**

**कस्य स्थानिवद्भावस्य निषेधाभावे प्रमाणं फलमुपपाद्य तदितरत्र निषेधे फलमुपपाद्यत ।**

उ०—परम्परया पदचरमावयवसाधकस्थानिवत्त्वस्य निषेधाभावे पदे अन्त इति सप्तमीसमासाश्रयणपरभाष्यमेव प्रमाणम् । अन्यथा वेतस्वानित्यत्र भसंज्ञाप्रतिबन्धकस्य स्थानिवद्भावस्य तत्प्रतिबन्धद्वारा सान्तवृत्तिपदसंज्ञासम्पादनद्वारा पदचरमावयवरुत्वसाधकत्वेन निषेधादेव सान्ते भसंज्ञया रुत्वाभावे सिद्धे तद्विरुध्येत । एवञ्च सकारान्तधर्मिकभसंज्ञाप्रतिबन्धकस्थानिवद्भावस्य परम्पराजश्त्वसाधकत्वेऽपि निषेधाप्रवृत्त्या षडिक इत्यत्र जश्त्वसिद्धिः फलमित्यवसेयम् । साक्षात्पदचरमावयवसाधकस्थानिवत्त्वनिषेधे सध्रीच इति फलम् । अत्र हि 'अचः' इत्यल्लोपस्य स्थानिवद्भावः साक्षात्पदचरमावयवसाधकः । साक्षात्पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलम्, एषो यन् हसतीति । अत्र हि यणादेशस्य स्थानिवत्त्वं साक्षात्पदचरमावयवोत्वप्रतिबन्धकम् । पदसंस्कारपक्षे एष यन्नित्यस्यैवेष्टत्वे तु हरिशब्दस्य य शब्देन समासे तत आचारक्विबन्तात्कर्त्तरि क्विप्यल्लोपयलोपयोः 'ह्रस्वस्य' इति तुकि हरिदित्यत्राल्लोपस्थानिवत्त्वस्य साक्षात्पदचरमावयवतुक्प्रतिबन्धकस्य निषेधः फलम् । परम्परया पदचरमावयवप्रतिबन्धकस्थानिवत्त्वनिषेधस्य फलं दध्यार, इति । अत्र हि 'कर्मण्यणि'त्यण्निमित्तकवृद्धिगुणयोः स्थानिवद्भावः 'ऋत्यक' इति प्रकृतिभावसम्पादनद्वारा यण् प्रतिबन्धक इति दिक् ।

**२८ प्र०—शेखरोक्तसकलसरणिमनुसृत्य वान्त इत्यत्र वकारादित्यादिग्रन्थं सुस्पष्टं व्याख्याय नागेशाभिहितप्रश्लेषखण्डनप्रकारमभिधाय च तत्र युक्तायुक्तत्वविमर्शो विधीयताम् ।**

उ०—ननु 'गव्यूतिरि'त्यत्रान्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वात् 'हलि सर्वेषामि'त्यनेन तत्र वकारग्रहणाननुवृत्तावपि 'लोपः शाकल्यस्ये'त्यनेन वा वलोपः कथन्नेति चेन्न, 'वान्तो यि प्रत्यय' इत्यत्र वकाराद्गोर्यूतावित्यत्र छकाराद्वा पूर्वभागे वकारस्य प्रश्लेषेण प्रश्लिष्टस्य वान्तविशेषणत्वेन तदन्तविधौ वान्तस्य पुनर्वान्तत्ववचनसामर्थ्याच्छ्रूयमाणस्यैव वकारस्यादेशविधानात् ।

ननु प्रश्लेषे सत्युभयत्र वकारः श्रूयेतेति चेन्न, 'लोपोव्योरि'त्यादिना लुप्तत्वात् । न च विशेषविहितत्वादपवादभूतेन कार्यित्वेन लोपे वकारस्य निमित्तत्वबाधे न तस्मिन् प्रश्लिष्टवलोपो भवितुमर्हतीति वाच्यम्, तदप्रयोगेऽचारितार्थ्यस्यैव

बाधकताबीजत्वेन निमित्तत्वानाक्रान्ते प्रकृते पूर्ववकारेऽन्यत्र रेफादौ कार्यित्वस्य चरितार्थतया बाधकत्वविरहात् ।

न च येनेति न्यायेन बाधाभावेऽपि तक्रकौण्डिन्यन्यायेनैव बाधो भविष्यतीति वाच्यम्, विभिन्नविभिन्नविधेयतानिरूपितोद्देश्यदलीयविषयतयोर्यत्र व्याप्यव्यापकभावस्तत्रैव तन्न्यायप्रवृत्तेरङ्गीकारात् ।

न च 'लोपो व्योरि'त्यत्र वकारस्य प्रत्याख्यानादेतावताऽपि कथमिष्टसिद्धिरिति वाच्यम्, छन्दसि जीवे रदानुकि जीरदानुरित्यादिप्रयोगाणां सत्त्वेऽपि लौकिकोदाहरणाभावपरत्वेन प्रत्याख्यानात्, अत एव अतो लून्तस्येत्यत्र, सिच्यन्तरङ्गत्वाङ्गीकारेऽलावीदित्यादिसिद्ध्यर्थं लुप्तनिर्दिष्टो वकार इति भाष्योक्तमपि सङ्गच्छते । न च छकाराद्वेत्युक्तिः कथमिति वाच्यम्, गव्यादौ भत्वेन पदत्वबाधाह्वव्ये च स्वत एव पदत्वाभावात्सूत्रे प्रश्लेषफलाभावेन तदुक्तिसङ्गतेः ।

**नागेशचरणास्तु**—छन्दसि सर्वविधीनां व्यवस्थितविकल्पत्वादेव गव्यूतौ वलोपवारणसम्भवे प्रश्लेषप्रयासो न सार्थक्याय । प्रश्लेषेऽपि 'लोपो व्योरि' त्यत्र वकारप्रत्याख्यानेन तल्लोपोऽसंभवी । 'अतोलून्तस्ये' त्यत्र लुप्तनिर्दिष्टो वकार इति 'इको गुणे'ति सूत्रस्थं भाष्यन्तु पूर्वपक्षयेव ।

न च च्छन्दसि लोपासत्त्वेऽपि—अध्वपरिमाणे लोपप्रसङ्गभङ्गो न सङ्गच्छत इति वाच्यम्, तत्रापि संज्ञाशब्दत्वेन संज्ञात्वभङ्गापत्तिभिया तदप्रसक्तेः । अत एव रघुनाथादिसंज्ञाशब्दे नित्यमपि णत्वं वार्यते ।

नन्वेवं सर्वनामशब्दे णत्वाशङ्कापरभाष्यविरोध इति चेन्न, आधुनिकविनियोगस्थले शास्त्रानुगतस्यैव विनियोग उचित इत्याशयात् । अनादिविनियुक्तसंज्ञास्थले तु यथाविनियुक्तानामेव साधुत्वमिति रघुनाथादौ णत्वाभाव इत्याहुरिति ।

**वस्तुतस्तु**—'लोपो व्योरि'ति सूत्रे वकारप्रत्याख्यानं त्वेकदेश्युक्तिः, 'इको 'गुणेति' सूत्रस्थभाष्यविरोधात् । अत एव 'न पदान्ते'ति सूत्रे पदान्तस्य स्थाने इत्यर्थे 'वृक्षवि'त्यत्र 'लोपो व्योरि'ति लोप आपादितो दीक्षितेन । शेखरेऽपि लण्सूत्रे 'वृक्षव् करोती'त्यत्र 'लोपो व्योरि'ति लोपस्याशङ्किष्यमाणत्वाच्च । छन्दसि सर्वविधीनां वैकल्पिकत्वमाश्रित्य 'गव्यूतिरि'त्यत्र वलोपवारणन्त्वगतिकगतिः । सवकारेणाध्वपरिमाणे गम्यमाने वान्तादेश 'इत्यर्थाभावेन संज्ञात्वभङ्गभियाऽपि लोपवारणं न समीचीनमिति प्रश्लेषपक्ष एव साधीयानिति दिक् ।

**२६ प्र०—'लोपः शाकल्यस्येति सूत्रे ऽचीत्यनुवृत्तेः प्रयोजनं शेख-**

**द्रोक्तदिशा सम्पाद्य, परेत्वित्यादिरीत्या तत्खण्ड्यताम् ।**

उ०—ननु 'लोपः शाकल्यस्ये'ति सूत्रेऽशीत्यनुवृत्तिर्निष्प्रयोजनेति चेन्न, वृक्षव् करोतीत्यत्र प्रसक्तलोपवारणेन तत्सार्थक्यात् । नच तत्र 'लोपो व्यो' रित्यनेनैव विज्निमित्तको लोपः स्यादिति वाच्यम्, णिलोपटिलोपयोः स्थानिवत्त्वेन तदप्रवृत्तेः । नच 'न पदान्ते'ति, सूत्रेण स्थानिवत्त्वनिषेधः स्यादिति वाच्यम्, विधेयस्य लोपस्य पदानवयवत्त्वात्तदप्रवृत्तेः । नच कर्मसाधनस्य विधिशब्दस्य तत्र विवक्षणे निषेधः स्यादेवेति वाच्यम्, स्थानिवत्त्वनिषेधं विना यः सिद्धः पदान्तः, तस्य विधौ स्थानिवत्त्वनिषेध इत्यर्थेन प्रकृते, न पदान्तसूत्रप्रवृत्तिपूर्वं पदान्तत्वाभावात्तत्र पक्षेऽपि निषेधाप्रवृत्तेः ।

नचैवमपि बहिर्भूतसुनिमित्तकपदसंज्ञायां टिलोपस्य स्थानिवद्भावाद्वस्य पदान्तत्वाभावादशीत्यस्याभावेऽपि न वृक्षव् करोतीत्यत्र लोपप्रसक्तिरिति वाच्यम्, साक्षात्, परम्परया वा पूर्वत्रासिद्धीयप्रापकः, तत्प्रतिबन्धको वाऽतिदेशो नेत्यर्थकेन 'पूर्वत्रासिद्धीय' इत्यनेन निषेधादिति ।

**परे तु**—न पदान्ता हलोऽणः सन्तीति लण्सूत्रस्थभाष्यात्, 'भोभगो' इति सूत्रेऽश्ग्रहणमनर्थकमन्यत्राभावादिति वार्त्तिकाच्च वृक्षवादेरनभिधानेन नेदमश्ग्रहणफलमिति तन्निष्प्रयोजनमेव ।

अश्ग्रहणमनर्थकमन्यत्राभावादिति व्याख्यानभाष्ये 'नह्यन्यत्र रुरस्ती'त्यत्र रुग्रहणस्योपलक्षणत्वेन 'अशोऽन्यत्र तन्निमित्तकार्यस्थानिनोभावादित्यर्थोवसेयः ।

नच प्रकृतेऽश्ग्रहणस्य निरर्थकत्वे 'उत्तरार्थं हलि सर्वेषामि'ति वृक्षव् करोतीत्यत्र माभूदिति भाष्यविरोध इति वाच्यम् । लण्सूत्रस्थभाष्यविरोधेन तस्यैकदेश्युक्तित्वात् । 'हलि सर्वेषामि'त्यत्र वकारनिवृत्त्यैव तद्वारणसम्भवान्न तत्राप्यश्ग्रहणप्रयोजनमित्यपि तस्य भाष्यस्यैकदेशित्वे साधकमवगन्तव्यमिति दिक् ।

**३० प्र०—'पूर्वत्रासिद्धीये न स्थानिवदि'त्यनेन साक्षात्, पदत्वादिद्वारकपरम्परया वा, पूर्वत्रासिद्धीयप्रापकस्य तत्प्रतिबन्धकस्य वा स्थानिवत्त्वस्य निषेधे फलान्युपपाद्य रपरसूत्रेण विधेयस्य रेफस्यावयवत्वं प्रसाध्य ग्रन्थसन्दर्भानुसारेण तत्फलमुपपादयत ।**

उ०—साक्षात्पूर्वत्रासिद्धीयसाधकस्थानिवत्त्वस्य निषेधे फलम्-किमु सन्तीति । अत्र 'श्नसोरल्लोप' इत्यल्लोपस्य स्थानिवद्भावः पूर्वत्रासिद्धीयस्य 'मय उञो वो

वे'ति वत्वस्य साक्षात्साधकः, ( सच निषिद्धयते ) परम्परया पूर्वत्रासिद्धीयसाधकस्य निषेधे फलम्–पिपठीस्तत्रेत्यत्र षत्वाभावः। अल्लोपस्य स्थानिवद्भावः पदसंज्ञाप्रतिबन्धद्वारा षत्वसाधकः, ( स च निषिद्धयते ) साक्षात्प्रतिवन्धकस्य निषेधे फलम्–राज्ञ इत्यत्र श्चुत्वसिद्धिः। अत्राल्लोपस्य स्थानिवत्त्वं साक्षात् श्चुत्वप्रतिबन्धकम्, ( तच्चानेन निषिद्धयते ) परम्परया प्रतिवन्धकस्य निषेधे फलम्—पिपठीरित्यत्र रुत्वसिद्धिः। अत्राल्लोपस्य स्थानिवद्भावः पदसंज्ञाप्रतिवन्धद्वारा रुत्वप्रतिवन्धकः, ( सच वार्यत इति )।

रपर इत्यवयवत्वविशिष्टपरत्वावच्छिन्नबोधकेन परशब्देन रः परो यस्येति षष्ठ्यर्थे बहुव्रीहिणा रेफस्यावयवत्वं बोध्यते। तथा च 'यदागमा' इति न्यायेन रेफविशिष्टस्य गुणवृद्धित्वेन 'ऋकारस्य गुणवृद्धी अरारावेवेति नियम उपपद्यते। अत एव 'गुणो भवति वृद्धिर्भवतीति–रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिवर्त्तते' इति भाष्यम् 'उः स्थानेऽण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफ' इति कैयटश्च सङ्गच्छेते। एवञ्च वव्रे इत्यादौ 'हलादिः शेष' इत्यनेनाभ्यासावयवस्यानादेर्निवृत्तिर्भवतीत्यपि फलमिति दिक्।

**३१ प्र०—'अन्तादिवच्चे'ति सूत्रस्यार्थमुपवर्ण्य स्थानिवत्सूत्रेण तस्य गतार्थता सम्भवति न वेत्युपपाद्यात्रत्यं ताद्रूप्यं निर्दिष्टं परिष्क्रियताम्।**

उ०—इह 'एकः पूर्वपरयो'रित्यतः पूर्वपरयोरित्यनुवृत्तमन्तादिशब्दाभ्यां क्रमेण सम्बद्धयते। एकमित्यनुवृत्तमेकादेशपरम्। अन्तादिशब्दौ चैकादेशस्थानिपरौ। पूर्वपरशब्दौ च तदुभयघटितसमुदायपरौ। एवञ्च पूर्वस्य परस्य च समुदायस्यान्तादिभ्यां वर्णाभ्यां सधर्मा तत्स्थानिक आदेशो भवतीत्यर्थः। ताभ्यां पृथगवस्थिताभ्यां तदुभयसमुदाये ये प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादिव्यवहारास्ते–एकादेशविशिष्टे पूर्वस्मिन् परस्मिन् समुदायेऽपि भवन्तीति यावत्।

[ अत्र तद्वच्चेत्येव सिद्धे 'अन्तादिवच्चे'त्युपादानेन ताद्रूप्यानतिदेशः सूच्यते ]

ननु क्षीरप इन इत्यस्य स्थाने क्षीरपेनेत्यादेश इत्यानुमानिके स्थान्यादेशभावे क्षीरपशब्दे इनशब्दे च, स्थानितापर्याप्तिरादेशता च क्षीरपेन शब्दे इति स्थिते एकाजुत्तरपदघटितसमासत्वं स्थानिवद्भावेन क्षीरपेनशब्दे स्थानिवत्सूत्रेणानीय णत्वोपपत्तेर्न तदर्थमन्तादिवच्चेति सूत्रस्यावश्यकत्वमिति चेन्न, एकाजुत्तरपदत्वस्याल्व्याप्यधर्मघटितत्वेनाल्विधावेति निषेधात्स्थानिवत्सूत्राप्रवृत्तेः। न च तत्रैकाच्त्वस्य

स्वतः सत्त्वेन केवलमपेक्षितोत्तरपदत्वेऽनल्विधाविति निषेधाप्रवृत्तेः पुनरनुपयोगः 'अन्तादिवच्चे'ति सूत्रस्येति वाच्यम्, एवमप्येकादेशे समुदाये स्थानित्वाभावेन भी ई भिय इत्यादावेकादेशविशिष्टे धातुत्वानापत्तेः। एकादेशपूर्वस्थानिघटिते पूर्वस्मिन् भीसमुदाये स्थानित्वपर्य्याप्त्यभ्युपगमे भी ई-इत्यस्य स्थाने 'भी' इत्यादेश इत्यानुमानिकस्थान्यादेशभावमाश्रित्य निर्वाहस्तु नोद्भावनीयः, एवं प्रत्येकमेकादेशस्थानिघटिते पूर्वस्मिन् परस्मिंश्च समुदाये स्थानित्वपर्य्याप्त्यभ्युपगमे स्व अश्व इत्यस्य स्थाने स्वाश्व' इत्यादेश इत्यानुमानिकस्थान्यादेशभावे पूर्वसमुदाय-स्वशब्दगतं स्वत्वं स्वाश्वशब्दे आनुमानिकादेशे स्थानिवद्भावेनादायेरिन्शब्दयोगे 'स्वादीरेरी'ति वृद्ध्यापत्तेः। प्लायत इति सिद्ध्यर्थं'मचः परस्मि'न्नित्यस्य प्रवृत्तये स्थानिवद्भावस्योभयत आश्रयणेऽप्यङ्गीकारेण 'अभीयादि'त्यत्रापि स्थानिवद्भावप्रवृत्त्या ह्रस्वत्वापत्तेर्दुर्वारत्वाच्च।

ननु स्ववृत्तित्व-स्ववृत्तिवर्णत्वव्याप्यत्वं-स्वस्थानिकादेशवृत्तित्वैतत्त्रितयसम्बन्धेन अन्तादिवर्णविशिष्टधर्मघटितधर्मस्य ताद्रूप्यपदार्थत्वे 'उत्तरपदाद्यच्त्वस्य ताद्रूप्यानतिदेशेनातिदेशो न भवती'ति परिभाषेन्दुशेखरग्रन्थविरोध इति चेन्न, स्ववृत्तित्व-स्ववृत्तिवर्णत्वव्याप्यत्व-स्वाभाववत्त्व-एतत्त्रितयसम्बन्धेन अन्तादिवर्णविशिष्टधर्मघटितधर्मस्यैव ताद्रूप्यपदार्थत्वात्। अभावश्च स्वस्थानिकादेशवृत्तित्व-स्वनिष्ठा या अभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकता-सम्बन्धानवच्छिन्नप्रकारतावच्छेदकता वा तदवच्छेदकत्वोभयसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्य इति दिक्।

**३२ प्र०—'ऋति ऋ वा' 'लृति लृ वे'ति वार्त्तिकयोर्विधेयस्वरूपं सप्रमाणमुपपाद्य प्रार्च्छतीत्यादौ-अन्तरङ्गपरिभाषया कथन्नेष्टसिद्धिरिति निगद्यताम्।**

उ०—'अकः सवर्णे' इत्यत्रान्तरतमत्वदीर्घत्वयोरुपादेयविशेषणयोर्विवक्षितत्वादन्तरतमस्य दीर्घत्वाभावेन दीर्घस्यान्तरतमत्वाभावेन चोभयविशिष्टैकासम्भवाद् विकल्प इति द्वयोर्ऋकारयो रेफद्वययुक्तत्वाद्विवृतत्वाच्च कदाचिद्रेफद्वययुक्त-ॠ भवति, कदाचिद्विवृतऋकारः। लृकारेऽपि कदाचिदकारान्तरतम ऋकारः कदाचिद् लृकारान्तरतम लृकार वार्त्तिकद्वयफलस्य 'अकः सवर्णे', इत्यनेनैव सिद्धेर्भाष्ये वार्त्तिकद्वयप्रत्याख्यानाद् 'ऋति ऋ वा' 'लृति लृ वे'त्युभयत्रापि वर्णद्वयं द्विमात्रं विधेयमिति प्रतीयते। द्विमात्रत्वाभावे तु-दीर्घसंज्ञाभावात्तदसङ्गतमेव स्यात्। तथा हि-व्यञ्जना-

नामर्धमात्रतया—एकैकस्य रेफस्यार्धमात्रत्वात् पूर्वत्र रेफद्वयस्यैका मात्रा एवञ्च द्वितीय-मध्यगस्य लकारद्वयस्यैका मात्रा च तद्भाष्यप्रमाणादेव निगम्यते ।

अथ च 'ए ओङ्' सूत्रे भाष्ये मातॄणामित्यादौ णत्वोपपत्तये 'वर्णैकदेशा वर्णग्रहणेन गृह्यन्ते' इति पक्षाङ्गीकारे प्रलूयेत्यादौ तुगादिशङ्कायाः 'दीर्घादि'ति तुग्विधानादिसामर्थ्याद् भेदेनाप्रतिभासमानेषु वर्णावयवेषु—अवयवसदृशस्वतन्त्र-वर्णाश्रयकार्याभावज्ञापनेन समाधानविधानवत्—'प्रातर्ऋतमि'त्यत्र 'होरी'त्यस्य 'तद्-लृकार' इत्यादौ 'तोर्लि'त्यस्य च शङ्कासमाधानाविधानेन 'यत्तद्रेफात्परं भक्ते'रिति हयवरट्सूत्रस्थभाष्येण च ऋलृक्सूत्रस्थयोरर्थमात्राज्भागस्य क्लृप्तत्वेन क्लृप्तकल्पनेति न्यायेन रेफद्वयस्य पुरस्तादुपरिष्टाच्च विद्यमानयोर्ह्रस्वऋकारांशयोरन्या मात्रा । एवञ्च लकारावभितो विद्यमानयोर्लृकारांशयोरन्या मात्रेति सिद्ध्या—तत्रोभयत्रापि विधेयस्य द्विमात्रत्वसिद्धिरवगन्तव्येति दिक् ।

ननु धातूपसर्गनिमित्तवृद्ध्यपेक्षयोपसर्गावयवमात्रनिष्ठपदान्तत्वनिमित्तकविसर्ग-स्यान्तरङ्गत्वेन तत्र कर्त्तव्ये वहिरङ्गस्य रेफस्यासिद्धत्वादेव प्रार्च्छतीत्यादौ विसर्गवा-रणसम्भवे ज्ञापकपर्य्यन्तानुधावनस्य नैरर्थक्यमेवेति चेन्न, 'वाह ऊठ्' इति सूत्रज्ञापि-ताया असिद्धपरिभाषायाः सापादिकत्वेन तद्दृष्ट्या त्रैपादिकस्यान्तरङ्गस्य शास्त्रस्या-सिद्धतयाऽन्तरङ्गाभावेन तदपेक्षवहिरङ्गस्याभावात्परिभाषाया अप्रवृत्तेः, नच कार्य-कालपक्षे त्रिपाद्यामपि तदुपस्थित्या तत एव विसर्गवारणसम्भवे पुनरपि ज्ञापकत्वा-श्रयणं निष्फलमेवेति वाच्यम् , तत्र पक्षे त्रिपाद्यां तदुपस्थितावपि पूर्वम्प्रति परस्य त्रैपादिकस्यान्तरङ्गस्यासिद्धत्वेन तद्दृष्ट्या पूर्ववहिरङ्गस्यासिद्धत्वासम्भवात् । न च कार्यकालपक्षमाश्रित्य त्रिपाद्यां तदुपस्थितिसामर्थ्येन पूर्वत्रासिद्धमित्यस्य बाधः, अत एव नार्कुटादौ न विसर्ग इति नोक्तदोष इति वाच्यम् , तथा स्वीकार्यमुत यथो-द्देशपक्षमाश्रित्य तेनास्याः बाधः स्वीकार्य ? इत्यत्र विनिगमकाभावेन तथोक्तेर्दु-र्वचत्वादिति दिक् ।

**२२ प्र०—'हैहे प्रयोगे हैहयोः' इति सूत्रस्य नियमत्वं विधि-त्वञ्चोपपाद्य तत्र नियमोक्तिसम्भवाभावं नियमाकारप्रदर्शनेन निरा-कृत्यात्रत्यो युक्तः पक्षो युक्त्या निरूप्यताम् ।**

उ०—हैहयोः सम्बोधनद्योतकत्वेन केवलाभ्यामपि ताभ्यां ( नामग्रहणनिषे-धस्थले ) सम्बोधनदर्शनेन च हैहयोरपि हूयमानपदार्थत्वाद् 'गुरोरनृत' इत्यनेनैव प्लुते सिद्धे 'हैहे प्रयोगे हैहयो'रिति सूत्रं नियमार्थम् । प्रयोगग्रहणात्त्वनन्त्ययोरपि

-तयोः प्लुतसिद्ध्यर्थम्, एवञ्च हे३ रामेत्यत्र प्लुतसिद्धिरिति। नियमाकारश्च—'हैहयोः प्रयोगे दूराद्धूते यद्वाक्यं तस्य चेत्प्लुतस्तर्हि हैहयोरेवे'ति।

केचित्तु—वाक्यस्य टेरित्यधिकारादन्त्ययोरेव तयोः प्राप्तौ हैहेग्रहणमनन्त्ययोरपि विधानार्थम्। तथा च हे३ रामेत्यत्र प्लुतसिद्धिः, प्रयोगग्रहणन्तु सम्बोधनानन्तरं हैहयोः प्रयोगे सम्बोधनविभक्त्यन्तेनैवाभिमुख्यस्य द्योतितत्वेन द्योत्याभावा-दनर्थकयोरपि तयोः प्लुतविधानार्थम्। एवञ्च राम है ३ इत्यादौ प्लुतसिद्धिः। हैहयोरिति तु—तयोर्हूयमानार्थत्वाभावात् पूर्वेणाप्राप्ते विध्यर्थम्। नियमे तु न किमपि प्रमाणमित्याहुः।

ननु 'गुरोरनृत' इत्यत्र 'दूराद्धूते' इत्यनुवृत्त्या तस्य पदविशेषणत्वेन हूयमान-पदार्थवाचकपदान्तवाक्यावयवहूयमानार्थकपदावयवगुरोरित्यर्थात्प्रत्यासत्त्या—

'यादृशहूयमानार्थकपदान्तं वाक्यं तादृशपदावयवगुरो'रित्यर्थेन हे रामेत्यत्राप्राप्ते तद्विधानार्थत्वेनास्य नियमार्थत्वं न सम्भवतीति चेन्न, वाक्यघटकप्रयुज्यमानयोर्हैहयो-रित्यर्थको 'हैहेप्रयोग' इत्येको योगो हे राम इत्यत्र विध्यर्थः। ततो हैहयोरिति द्वितीयो योगः, सच नियमार्थ इत्याशयात्। हैहेघटितवाक्यावयवगुरोश्चेत्प्लुतस्तर्हि हैहेघटकगुरोरेवेति नियमाकारः, एवं च हैहेघटितवाक्यातिरिक्तत्वेन 'गुरो'रिति सूत्रे सङ्कोच इति न कश्चिद्दोष इति दिक्।

**३४ प्र०—'निपात एकाजनाङ्' इति सूत्रे अनाङ् इत्यत्र नञः पर्युदासप्रसज्यप्रतिषेधपक्षयोः कतरो हि पक्षः समीचीन इति सुष्ठु विविच्य, एकग्रहणस्य प्रयोजनं सविशदं निरूपयत।**

**उ०**—ननु 'निपात एकाजनाङ्' इत्यत्रानाङ् इति प्रसज्यप्रतिषेध एव नञः कुतो नार्थ इति चेन्न, प्रसज्यप्रतिषेधपक्षे वाक्यभेदासमर्थसमासकल्पनापत्त्या तदपेक्षया पर्युदासपक्षस्यैव ज्यायस्त्वात्। यदि प्रथमपक्ष एव सूत्रकृतां विवक्षितोऽभविष्यत्तदा 'एकाज्नाङ्' इत्येवासूत्रयिष्यत्। अत एव वासुदेववाचकस्य अशब्दस्य आङा सहाव्ययीभावे 'आ आत् = 'अम्' इत्यादौ सत्यभिधाने स्वत आङ्भिन्नत्वेन पूर्वान्तवत्त्वेन निपातत्वेऽपि प्रगृह्यत्वाभावेन प्रकृतिभावो न भवति। पूर्वान्तवत्वे-नाङ्त्वातिदेशोऽतिदिश्यमानधर्मविरुद्धस्वाश्रयधर्मप्रयुक्तकार्याभावस्यातिदेशस्वभावसिद्ध-त्वात्। प्रसज्यप्रतिषेधपक्षे तु तादृशार्थस्य लब्धुं न शक्यतया प्रतिषेधाभावेन प्रगृह्यसंज्ञया प्रकृतिभावापत्तिः स्यात्। न च पर्युदासपक्षे 'आ उ ओ' इत्यत्रैकादेशे ओकारनिष्ठस्य आङ्भिन्नत्वस्यातिदेशेन 'निपात एकाच्' इत्येव प्रगृह्यत्वे सिद्धे

'ओत्' इति सूत्रे 'ओषु यातम्' इत्यादौ 'प्रतिषिद्धार्थोऽयमारम्भ' इति भाष्यमनुपपन्नमिति वाच्यम् ? आङ्भिन्नत्वस्याशास्त्रीयत्वेनातिदेशेन लब्धुमशक्यत्वात् नचैवमपि 'आ उ ओ' इत्यत्र 'अनाङ्' इति प्रतिषिद्धार्थोऽयमारम्भ' इति प्रागुक्तभाष्यमनुपपन्नमेव, अनाङ् इत्यस्य प्रतिषेधार्थकथनेन प्रसज्यप्रतिषेधस्यैव प्रतीतेरिति वाच्यम् ? पर्युदासपक्षेऽपि प्रतिषेधस्य फलितार्थत्वेन तादृशफलितं प्रतिषेधमादायैव पूर्वोक्तभाष्यप्रवृत्तेरसामञ्जस्याभावात्। एवञ्च अनाङ् इति तद्भिन्नतत्सदृशग्राहकात्पर्युदासादेव निपातैकाज्रूपत्वे लब्धे निपात एकाज्ग्रहणं निपातस्यैकाचः सर्वस्य सङ्ग्रहो यथा स्यात्, आङ्सदृशस्यैकाचोऽर्थवतो निपातस्यैव पर्युदासबलात् ग्रहणं मा भूत्' इत्येवमर्थम्। तेन पादपूरणार्थस्य कमीमिदु' इत्यादेरपि प्रगृह्यत्वं सिद्ध्यति। ननु स्वाङ्गसमुदाये स्वाङ्गत्वाभाववदच्समुदायेऽपि अच्त्वाभावात् 'अच्' इति कथनेनापि अच् समुदायग्रहणाभावेन प्रेदमित्यादौ दोषाभावादेकग्रहणं व्यर्थमिति चेन्न, व्यर्थीभूय 'अन्यत्र वर्णग्रहणे जातिग्रहणम्' इत्यर्थज्ञापनद्वारा तस्य चारितार्थ्यात्। तेन 'धीप्सति' इत्यत्र मकारभकारयोर्द्वयोरपि हल्त्वजात्यवच्छिन्नतया हल्ग्रहणेन ग्रहणात् कित्वे सति अनुनासिकलोपः सिध्यति। उक्तज्ञापनघटकस्य जातिग्रहणमित्यस्योपात्तजात्याश्रयैकानेकव्यक्तिग्रहणमित्यर्थकतया 'तितउ' शब्दैकदेशस्य 'अउ' इत्यस्यानुकरणे 'अउ अकरोत्' इत्यत्र 'अनुकरणं चानितिपरम्' इति निपातत्वेऽपि प्रगृह्यत्वाभावोऽपि एकग्रहणस्य फलमवसेयम्।

**३५ प्र०—'उञ ऊँ' इत्यत्र योगविभागस्य किंफलमुपन्यस्तं तच्च युक्तं न वेति विचार्य उत्तरयोगे विशिष्टविधानं सहविधानं वेत्यनयोः पक्षयोः को ज्यायान् इत्यपि विविच्यताम्।**

**उ०**—'उञ ऊँ' इत्येकयोगे शाकल्यग्रहणानुवृत्त्यभावे प्रगृह्यत्वस्याऽऽदेशस्य च सहविधानात् 'ऊँ' इतीत्येकमेव रूपं स्यात् उ इति वितीति च रूपद्वयं न सिद्ध्येत्। शाकल्यग्रहणानुवृत्तावपि प्रगृह्यत्वस्य ऊँ आदेशस्य विकल्पे 'ऊँ इति' वितीति स्यात् नतु 'उ इती'ति। नन्वनेन विकल्पेनोभयोरभावपक्षे 'निपात' इति प्रगृह्यत्वेन 'उ इती'त्येव स्यान्न तु वितीति—इदमयुक्तमिति चेन्न, प्राप्तविभाषात्वेनास्य पक्षेऽभावविधायकतया तदप्रवृत्तेः। एवञ्च योगविभागस्य 'उ इती'ति रूपसिद्धिः फलमिति स्पष्टमेव लभ्यते।

**वस्तुतस्तु**—योगविभागस्य 'विती'त्येव युक्तं फलमित्यवगन्तव्यम्। तथाहि एकयोगे उञ इति श्रुतेरादेशेन सम्बद्धत्वे न प्रगृह्यसंज्ञेति सा 'निपात एका

ञि'ति नित्यैव-उञो भविष्यतीति शाकल्यश्रुत्यनुवृत्त्याऽऽदेशे विकल्पिते रूपद्वयेनैव भाव्यमिति ।

'ऊँ' इति योगे 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती'त्यत्रैव प्रगृह्यसंज्ञ कत्वाविशिष्ट 'ऊँ' इत्यादेशो विधीयत इति विशिष्टविधानं सम्पद्यते। न च प्रगृह्यत्वमादेशश्च शाकल्यमते—इति तयोरेकस्मिन्नेव प्रयोगे प्रवृत्त्या पक्षे 'विती'त्यस्य सिद्धावपि 'उ इती'ति न सिद्ध्येदिति वाच्यम्, योगविभागसामर्थ्येन तन्मत एव 'ऊँ' इत्यादेशस्य भावाभावकल्पनात् ।

प्रगृह्यत्वस्य साक्षादुद्देश्यसम्बन्धस्य क्लृप्ततया विधेयविशेषणत्वे मानाभावेन उञनुवादेन सहविधानमेव न्याय्यमिति सहविधानपक्षवादिनामाशयः। आदेशे प्रगृह्यत्वन्तु स्थानिवद्भावाद्विधेयम्। ननु भाष्ये प्रगृह्यसंज्ञकश्चेत्युक्तमिति तेन विरोध इति चेन्न, तस्य स्थानिवद्भावस्वरूपकथनपरत्वेनादोषादिति ।

**वस्तुतस्तु**—उभयोःसहविधाने वाक्यभेदापत्त्या गौरवमिति विशिष्टविधानपक्षस्यैव ज्यायस्त्वम्। अत एव भाष्येऽपि प्रगृह्यसंज्ञकश्चेत्यनेन विशिष्टविधानमेव बोधितमिति दिक् ।

## अथ हल्सन्धिप्रकरणम् ॥ ४ ॥

**३६ प्र०—'यथासंख्यमनुदेशः समानामि'ति सूत्रार्थं निरूप्य क्वचिल्लक्ष्ये सङ्गमनपुरस्सरं स्पष्टं यथासंख्यत्वं परिष्कृत्य क्रमपदार्थो निरुच्यताम् ।**

**उ०**—अनोः पश्चादर्थकत्वात्, दिशेर्ज्ञानार्थकत्वाच्च उपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकांक्षाभास्यसम्बन्धोऽनुदेशपदार्थः समानामित्यस्यावृत्त्यैकत्र प्रतियोगित्वमपरत्रानुयोगित्वं षष्ठ्यर्थः। समानामित्यस्य तुल्यसंख्यावतामित्यर्थः। संख्यामनतिक्रम्येति विग्रहेण यथासंख्यमित्यस्य संख्याकर्मकातिक्रमणकर्तृत्वाभाववानित्यर्थः। संख्यात्र क्रमः। ( क्रमवैशिष्ट्येन ज्ञानपर्यन्तानुधावने फलाभावः ) **एवञ्च**—तुल्यसंख्यावत्प्रतियोगिकः, तुल्यसंख्यावदनुयोगिकश्चोपस्थितिपश्चाद्भवशाब्दबोधविषयीभूताकांक्षाभास्यसम्बन्धः—क्रमकर्मकातिक्रमणकर्तृत्वाभाववान् भवतीति यथासंख्यसूत्रार्थः ।

**प्रकृत आकांक्षाभास्यसम्बन्धे यथासंख्यत्वञ्च—**

स्वप्रतियोगिवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावदनुयोगिकत्व( वत्त्व )मू

**साजात्यञ्च**—स्वनिरूपकापेक्षाबुद्धिनिष्ठजनकतानिरूपितजन्यतावच्छेदक संख्यात्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकतावच्छेदकत्व—स्ववृत्तिस्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वविशिष्टावच्छिन्नधर्मितात्व—स्वनिरूपकापेक्षाबुद्धीयैकत्वनिष्ठप्रकारतानिरूपितैकत्वानवच्छिन्नधर्मितात्वैतदन्यतरवत्त्वैतदुभयधर्मेण ।

यथा—'समूलाकृतजीवेषु हन्–कृञ्–ग्रह' इत्यादौ तुल्यसंख्यावत्समूलाकृतजीवप्रतियोगिकः, तुल्यसंख्यावद्धन्कृञ्ग्रहानुयोगिकश्च य आकांक्षाभास्याव्यवहितोत्तरत्वादिः सम्बन्धस्तत्र स्वप्रतियोगिसमूलवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्धनानुयोगिकत्वम्, एवं स्वप्रतियोगि—कृतवृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावत्कृञनुयोगिकत्वम्, स्वप्रतियोगि—जीववृत्त्यपेक्षाबुद्धिविशेषविषयतासजातीयापेक्षाबुद्धिविशेषविषयतावद्ग्रहानुयोगित्वमित्यतः (यथासंख्यस्वरूप) संख्याकर्मकातिक्रमणकर्तृत्वाभाव इति समन्वयः । क्रमश्च पदार्थश्चापेक्षाबुद्धिविशेषविषयत्वरूपो बोध्य इति दिक् ।

**३७ प्र०—'ङमो ह्रस्वादची'त्यादिसूत्रस्य प्राचीननवीनयोर्मते कस्कोऽर्थः ? कश्च परमदण्डिनेत्यादौ ङमुडूवारणोपायः ? उत्तरपदत्वे चेत्यादिवार्त्तिके मध्यमपदत्वानाक्रान्तमेवोत्तरपदं गृह्यत इति कार्यित्वनिवेशसाफल्याय कीदृशं मध्यमपदत्वमपेक्षितम् ? इति सर्वं सुस्पष्टमुपपाद्यताम् ।**

उ०—पदस्येत्यनुवृत्तस्य सामानाधिकरण्यानुरोधात् पञ्चम्यन्तत्वेन विपरिणामः । ङम इति पञ्चमीबलादचीति षष्ठ्यर्थे सप्तमी । पदविशेषणत्वेन ङम् इत्यस्मात्तदन्तविधिः । **एवञ्च**—ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो ङमुडित्यर्थः । परमदण्डिनेत्यादौ दण्डिन्नित्यस्य प्रत्ययलक्षणेन पदत्वमादाय ततः परस्य 'आ' इत्यस्य ङमुट् तु न, उत्तरपदत्व इति प्रत्ययलक्षणनिषेधात् । एवञ्च तेन निषेधेन सिद्धमिति भाष्यमपि सङ्गच्छत इति **प्राचीनाः ।**

**नवीनास्तु**—गौरवाद् विभक्तिव्यत्ययकल्पनमुपेक्ष्य 'पदावयवङमः परस्येति वैयधिकरण्येनान्वयाङ्गीकारानन्तरं मण्डूकप्लुत्या 'ङञि च' पदे' इत्यतः पदे इत्यनुवर्त्याचीत्यत्र तदादिविधावजादेः पदस्य ङमुडित्यर्थेन परमदण्डिनेत्यादौ 'आ' इत्यस्य पदत्वाभावेन ङमुडभावं प्रसाध्य तेन निषेधेन सिद्धमित्यस्यैकदेशित्वं समाचक्षत । 'उत्तरपदत्वे चे'ति प्रत्ययलक्षणनिषेधस्तु न शङ्क्यः, माषकुम्भवापेनेत्यादौ मध्यमपदाभावेऽपीति निषेधासिद्धेर्यत्रोत्तरपदस्य कार्यित्वं तत्रैव तत्प्रवृत्तेरिति ।

न च पूर्वदण्डिप्रिय इत्यादौ दण्डिन् इत्यत्र 'उत्तरपदत्वे चे'ति निषेधाप्रवृत्तये उत्तरपदं मध्यमपदत्वानाक्रान्तमेवेत्यस्य वक्ष्यमाणत्वेन माषकुम्भवापेनेत्यादावपि कुम्भेत्यस्य मध्यमपदत्वाक्रान्तत्वादुत्तरपदत्वे चेति निषेधाप्रवृत्तौ 'पदव्यवायेऽपी'ति निषेधस्य सूपपादत्वेन तदर्थं कार्यित्वनिवेशो निरर्थक इति वाच्यम्, यद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञा चिकीर्षिता तद्वृत्तिविशिष्टत्वं मध्यमपदत्वमिति परिष्कारेणादोषात्। वै० स्वघटत्व—स्वघटकार्थवदव्यवहितपूर्वत्व, स्वघटकार्थवदव्यवहितोत्तरत्वैतत्त्रितयसम्बन्धेन। 'पूर्वदण्डिप्रिय' इत्यत्र चैकावृत्तिः, तथा च दण्डिन्नित्यस्य निरुक्तमध्यमपदत्वाक्रान्तत्वेन न प्रत्ययलक्षणनिषेधः। माषकुम्भवापेनेत्यादौ तु वृत्तिद्वयम्। तत्र 'माष आम् कुम्भ सु' इत्येतद्वृत्तिघटकार्थवदव्यवहितपूर्वत्वाभावान्न कुम्भेत्यस्य पूर्ववृत्तिवैशिष्ट्यम् 'कुम्भ अस् वाप' इत्येतद्वृत्त्यारम्भकसुब्निमित्तिका पदसंज्ञैव न चिकीर्षितेति कुम्भेत्यस्य मध्यमपदत्वानाक्रान्तत्वेन प्राप्तप्रत्ययलक्षणनिषेधस्य वारणार्थं कार्यित्वनिवेशोऽवश्यमङ्गीकार्यो भवतीति दिक्।

## अथ विसर्गसन्धिप्रकरणम् ॥ ५ ॥

**३८ प्र०—अत्र प्रकरणे सर्वत्र सत्त्वं विधाय 'इणः ष' इत्यनेन षत्वं विधेयमिति पक्षः समर्थनीयः शेखरोक्ततत्खण्डनप्रदर्शनमुखेन।**

**उ०—अयंभावः**—'इणः ष' इति सूत्रस्य 'इण उत्तरस्य विसर्गस्थानिकसस्य षत्वमित्यर्थं कृत्वाऽत्र षत्वप्रकरणे सर्वैः सूत्रैः सत्वविधानमेवेति भाष्योक्तं समीचीनतयोपपद्यते। **तथाहि**—'पुँस्पुत्र' इत्यादौ सस्य मस्थानिकत्वेन न षत्वापत्तिर्दोषः। कल्पान्तरे कृतसम्बन्धयोः 'अनव्ययस्य-काम्ये' इत्यनयोरिहकल्पे सम्बन्धस्य, 'अपदादेरित्यत्र स्वरितत्वकल्पनायाश्च नावश्यकत्वमित्यपि लाघवम्, भवति च तावता निष्कृतम्' 'दुष्काम्यति' 'दुष्करोती'त्यादौ षत्वसिद्धिः। गीः काम्यतीत्यादौ तु सकाराभावादेव न षत्वशङ्कालेशोऽपीति।

**अत्र शेखरकृतः**—'इदुदुपधस्य' द्विस्त्रिश्चतु'रित्यादिना विहितसत्वस्य 'इणः ष' एतद्दृष्ट्या सिद्धत्वेन निष्कृतमित्याद्यसिद्धेर्न समीचीनोऽयं पक्षः। न च 'प्रकरणे प्रकरणमसिद्धं न योगे योग' इति सत्त्वात्सिद्धिशङ्का न समीचीनेति वाच्यम्, ज्ञापकाऽसम्भवादेतत्पक्षस्यासत्त्वात्। 'विसर्जनीयस्य षत्व'मिति पक्षे तु सकारषकारयोः स्वरितत्वेऽपि मण्डूकप्लुत्या यथायोग्यं सम्बन्धस्तेन नोभयं एवं सर्वत्र प्रसक्तमित्याहुः।

**वस्तुतस्तु**—इडाया वा'त्यतः पूर्वं 'इणः ष' इति सूत्रस्य पाठेन न 'निष्कृत'-

मित्यादौ षत्वासिद्धिशङ्का, अपि तु 'अनव्ययस्येत्यादीनां सम्बन्धकल्पनाभावात्, युगपत्षत्वसत्त्वप्राप्तिशङ्काया अभावाच्च लाघवपरिचुम्बितभाष्योक्तपक्ष एव साधीयानिति दिक्।

**३९ प्र०—'द्विस्त्रिश्चतुरिति कृत्वोर्थे' इति सूत्रे द्विस्त्रिश्चतुरिति ग्रहणं किमर्थमित्यभिधायात्र युक्तः पक्षः स्थाप्यताम्।**

उ०—ननु 'कृत्वोर्थे विद्यमानस्य पदस्येदुदुपधस्य यो विसर्ग' इत्यर्थात् पञ्चकृत्वः करोतीत्यादौ इदुपधत्वस्योदुपधत्वस्य वाऽसत्त्वेन न षत्वापत्तिर्दोषः, इदुदुपधस्येत्यस्य पदविशेषणत्वेन च न चतुष्करोतीत्यादावव्याप्तिरिति—द्विस्त्रिश्चतुरिति व्यर्थमेवेति चेन्न, द्विष्करोतीत्यादावप्रत्ययस्येति निषेधेऽपि 'कृत्वोर्थे' इत्यस्यासिद्धत्वेन च्तुःशब्दे 'इदुदुपधस्ये'त्यनेन नित्यषत्वाऽऽपत्तेः। ( कृते तद्ग्रहणे तु प्रतिपदोक्तत्वादिदुपधस्येत्यस्य वाधो भवतीति बोध्यम् )।

न चोपसर्गादसमासेऽपीत्यत्रासमासेऽपीति ज्ञापिते 'प्रकरणे प्रकरणमसिद्धमि'ति पक्षे नायं दोष इति वाच्यम्। तत्सूत्रे कैयटे 'पूर्वपदादि'ति सूत्रे च भाष्ये तत्पक्षस्य दूषितत्वात्।

**वस्तुतस्तु**—लाघवाद्द्विस्त्रिरित्येव वक्तव्ये कृत्वोर्थप्रत्ययान्तसामान्ये प्रवृत्त्यर्थं कृत्वोर्थग्रहणाच्चतुःकरोतीत्यत्र नित्यषत्वं वाधित्वा विकल्पप्रवृत्तेः शेखरोक्तं चिन्त्यमेवेति दिक्।

**४० प्र०—परमसर्पिष्करोति, ब्राह्मणस्य सर्पिष्करोतीत्यनयोः षत्वमुपपाद्य, सर्पिः कालकम्, सर्पिष्पीयत इत्यनयोः षत्वतदभावौ साधनीयौ।**

उ०—ननु प्रत्ययग्रहणपरिभाषोपस्थित्या 'इसुसोः सामर्थ्ये' इति सूत्रस्येसन्ततदादेरुसन्ततदादेर्विसर्गस्य षत्वमित्यर्थेन परमसर्पिष्करोतीत्यत्र परमसर्पिरित्यस्येसन्ततदाद्यभावात्, अवयवस्य च 'उत्तरपदत्वे चे'ति निषेधेनापदत्वात् षत्वं न स्यादिति चेन्न, 'अनुत्तरपदस्ये'ति निषेधज्ञापकेन तदाद्यात्मकशब्दरूपं विशेष्यमादाय पूर्वं तदन्तविधौ पुनः पदविशेषणतया तदन्तविधिना 'इसन्तमुसन्तं यत्तदादितदन्तं यत्पदं तस्येत्यर्थेनादोषात्।

न च 'सापेक्षमसमर्थव'दिति वचनेन 'ब्राह्मणस्य सर्पिष्करोतीत्यादाविष्टषत्वविकल्पो न स्यादिति वाच्यम्; तस्यैकार्थीभावसामर्थ्य ( वारकत्वेन ) विषयत्वेन प्रकृतेऽप्रवृत्त्या क्षतिविरहात्।

न चैवं 'समानाधिकरणमसमर्थव'दित्यस्याप्येकार्थीभावसामर्थ्यविषयकत्वेन सर्पिः कालकम् इत्यादौ तदप्रवृत्त्या षत्वापत्तिरिति वाच्यम्, 'अधात्वभिहितं समानाधिकरणमसमर्थव'दित्यस्योभयविषयत्वेन प्रकृते सामर्थ्यविरहात्षत्वाप्राप्तेः।

न चैवमपि 'सर्पिष्पीयते' इत्यत्रापि सामानाधिकरण्यस्य धातुनाऽनभिहितत्वेन सामर्थ्याभावात् षत्वं न स्यादिति वाच्यम्, धातुसहचरितप्रत्ययाभिहितार्थेन समानाधिकरणमसमर्थवन्नेत्यर्थविधानेनादोषादिति दिक्।

## अथ स्वादिसन्धिप्रकरणम् ॥ ६ ॥

**४१ प्र०—सुच इति न्यासं समर्थ्य, आगच्छ हे पयो३द् आगच्छ हे पयो३द् इति प्रयोगयोरुत्वं समर्थनीयम्।**

उ०—'वनोरचे'त्यत्रेव शब्दस्वरूपं विशेष्यमादाय तदन्तविधौ पुनः पदस्येति विशेष्यमादाय तदन्तविधिना सुजन्तान्तस्येत्यर्थेनैव सकलेष्टसिद्धौ 'द्विस्त्रिश्चतु'-रिति सूत्रस्थाने 'सुच'(१) इत्येव सूत्रयितव्यम्।

ननु 'अतोरोरप्लुता'दिति सूत्रेऽप्लुतादित्यस्याभावे 'एहि सुस्रोत३ अत्र स्नाही'-त्यत्र प्लुतासिद्धत्वेनोत्वापत्तिं सम्पाद्य कृते च तद्ग्रहणे तत्सामर्थ्यात्प्लुतासिद्धथभावं परिकल्प्य यथोत्वं वारितं तथैव पयस्यटतीत्यर्थे 'आगच्छ हे पयोऽट्' इत्यत्र 'वाक्यस्य टे'रिति विहितप्लुतस्य, पयो ददातीत्यर्थे 'आगच्छ हे पयोदे'त्यत्र 'गुरो'रिति विहितप्लुतस्य च सिद्धतयोत्वं न स्यादिति चेन्न; 'पूर्वत्रासिद्ध'मित्यसिद्धत्वाभावेऽप्येकपदघटकवर्णद्वयसापेक्षमन्तरङ्गमुत्वम्प्रति वाक्यसम्पादकपदान्तरसापेक्षप्लुतस्य 'असिद्धं बहिरङ्ग'मिति परिभाषयाऽसिद्धत्वे बाधकाभावात्। न च परिभाषादृष्ट्या त्रिपाद्या असिद्धत्वात्कथमेतदिति वाच्यम्, परिभाषादृष्ट्याऽसिद्धस्यापि प्लुतस्योत्वम्प्रत्यसिद्धत्वप्रतिपादने क्षतिविरहादिति दिक्।

**४२ प्र०—'भोभगोअघो' इत्यादिसूत्रेऽशग्रहणस्य फलं प्राचीन-**

---

(१) न च चतुःकरोतीत्यत्रैतस्यासिद्धत्वा 'दिदुदुपधस्ये'ति नित्यषत्वापत्तिः, यथान्यासे तु विशिष्यचतुर्ग्रहणेन नित्यषत्वस्य बाधः। द्विः करोतीत्यादौ 'इसुसो'रित्येव सिद्धे चतुः करोतीत्यत्र नाप्राप्तेऽस्यापवादत्वन्तु नाशङ्कनीयम् 'द्विः पाक' इत्यादौ समासे सामर्थ्यविरहात् 'इसुसो'रित्यस्याप्राप्तौ अस्यावश्यकत्वादिति वाच्यम्, 'कृत्वोर्थे' इत्यस्य स्थाने 'सुच' इति सूत्रयितुमुचितमित्याशयात्। यद्वा 'सुच' इत्युत्तरं 'चतुर' इति न्यासः, सुजन्तस्य चतुरः षत्वमित्यर्थे न कश्चिद्दोष इति।

**नवीनमतभेदेन निगद्य, 'एतत्तदोः सुलोपोऽको'रित्यादिसूत्रस्यार्थो निर्दुष्टो विलिख्यताम् ।**

उ०—प्राचीनाः—'भोभगो' इत्यादिसूत्रेऽशूग्रहणाभावे देवाः सन्तीत्यत्र देवार् सन्तीतिदशायां यत्वापत्तिः । न च यत्वस्यासिद्धतया विसर्गे सति देवाः सन्तीति सिद्धौ तद्ग्रहणार्थमेवेति वाच्यम् , सत्यपि विसर्गे तस्य स्थानिवद्भावेन यत्वापत्तेर्दुर्वारत्वात् । नचानल्विधाविति निषेधेन स्थानिवद्भावो भवितुं नार्हतीति वाच्यम् , यत्वविधौ रुत्वेनैव रेफस्याऽऽश्रयणेन तस्य चाल्त्वव्याप्यधर्मत्वाभावेन तदप्रवृत्तेः । एवञ्च तत्र यत्वव्यावृत्त्यर्थमशूग्रहणं कर्त्तव्यमित्याहुः ।

**नवीनास्तु**—अनल्विधावित्यस्याल्त्वव्याप्यधर्मावच्छिन्नस्थानितानिरूपितादेशताऽऽश्रयधर्मिकारोपप्रकारीभूतधर्मेण साक्षादवच्छिन्नोद्देश्यताकविधौ न स्थानिवदित्यर्थमङ्गीकृत्य रेफत्वस्य विसर्गस्थानितावच्छेदकत्वेन रेफवृत्तिरुत्वाश्रयमपि 'भोभगो' इत्यल्विधिरेवेति स्थानिवद्भावाभावेन न देवाः सन्तीत्यत्र यत्ववारणं फलं किन्तु पयःस्वित्यादौ 'रोः सुपी'ति विसर्गेण तस्यानल्विधित्वात् स्थानिवद्भावेन प्राप्तयत्वापत्तिवारणमेवाशूग्रहणफलमिति प्राहुः ।

'एतत्तदोः'रित्यादिसूत्रस्यैतत्तदोर्विहितो यः सुस्तस्य लोप इत्यर्थे कृते, परम स ददातीत्यादौ सोस्तच्छब्दाद्विहितत्वाभावेन सुलोपो न स्यात् , तस्मात् अककारयोरेतत्तदोरनन्तरो ( पश्चादव्यवहितसमीपो ) यः सुस्तस्य लोपः स्याद्धलि न तु नञ् समासे इत्यर्थ एव निर्दुष्टोऽवगन्तव्य इति दिक् ।

**४३ प्र०—विप्रतिषेध सूत्रस्य कथं नियमार्थत्वं कथं वा विध्यर्थत्वं किञ्च तयोः फलमिति सविशदं सम्यगुपपाद्य कार्ये कुत्र परत्वं गृह्यते ? इति तत्रत्य विचारचातुरीमविकलमुद्भावयत ।**

उ०—ननु कस्याऽपि सूत्रस्य विधिनियमयोरन्यतरस्यैव प्रतिपादकत्वेन दृष्टत्वात् विप्रतिषेध सूत्रस्य कथमुभयप्रतिपादकत्वमिति चेदत्रोच्यते—यथा 'ण्वुल्तृचौ' इति शास्त्रविहितण्वुल्तृचोः प्रत्यययोः क्वचिदपि लक्ष्ये यौगपद्यासम्भवात् पर्यायेणैव प्रवृत्तिस्तथैव पूर्वपरयोरपि कार्ययोर्युगपदसंभवात् पर्यायेणैव प्रवृत्तिर्भवतीति यदा पूर्वशास्त्रप्रवृत्तिस्तदा योऽप्राप्तांशस्तत्पूरणं परेण शास्त्रेण क्रियत इति 'परमेवेदम्' इति नियमः फलितो भवति । पूर्वशास्त्रस्य च एतद्विषयाविषयकत्वं कल्प्यम् । तदुक्तं 'विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति' इति । एवं द्वयोः शास्त्रयोः क्वचिल्लक्ष्ये ... प्रयोगे युगपदसम्भवे स्वकार्यसमर्पणञ्च विप्रतिषेधः । तत्र

प्रायेणैकस्य कार्यद्वययोगकृतेऽसंभवे एतस्य प्रवृत्तिः। यथा 'वृत्तेभ्यः' इत्यत्र दीर्घैत्वयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः। क्वचित्तु केवलासंभवेऽपि एतस्य प्रवृत्तिः—यथा 'शिष्टात्' इत्यत्र तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासंभवः, नत्वत्र एकस्य कार्यद्वययोगकृतोऽसंभवो वर्तते प्रत्ययस्य तातङः प्रकृतेश्च शाभावस्य प्राप्तेरेकस्य कार्यद्वययोगाभावात्। यद्यपि तातङादेः स्थानिवत्त्वेनास्त्येव शाभावस्य हि रूपस्वनिमित्तानन्तर्यं तथापि आदेशप्रवृत्त्युत्तरमेवातिदेशप्राप्तिर्नतु तत्प्रवृत्तिकाले इति युगपदसंभवोऽव्याहत एवेति परत्वात् तातङि सकृद्गतिन्यायेन न शादेश इति भावः। तथा चैतन्नियमफलितार्थपरैव 'सकृद्गतौ विप्रतिषेधे यद्वाधितं तद्वाधितमेव' इति परिभाषा बोध्या। तेन 'तिसृणाम्' इत्यत्रापि त्रयादेशतिस्रादेशयोर्यौगपद्यासंभवेन परत्वात्तिस्रादेशे पुनः स्थानिवत्वेन त्रयादेशो न भवतीति भावः। एवञ्च प्रागुक्तशास्त्रीयदृष्टान्तेनास्य नियमार्थत्वं बोध्यम्। विध्यर्थत्वपक्षश्च निम्नलौकिकदृष्टान्तेन सिध्यति। तथाहि—यथा तुल्यबलयोः स्वामिनोरेकः प्रेष्यो भवति स पर्यायेण तयोः कार्यं सम्पादयति यदा तु तं प्रेष्यमुभावपि स्वामिनौ युगपत्प्रेषयतो नानादिक्षु च कार्ये भवस्ततदोभयोरपि कार्यं न करोति यौगपद्यासंभवात्, तथा द्वयोः शास्त्रयोर्लक्ष्ये प्रेष्ययोः क्वचिदपि लक्ष्ये यौगपद्यासंभवादप्रतिपत्तौ प्राप्तायामत्यन्ताप्राप्ततया 'इदं परं भवतीति विधित्वं फलति। तत्र यदि परस्मिन् कृते सति पूर्वशास्त्रप्रवृत्तावपि परशास्त्रप्रवृत्तिवैयर्थ्यं न भवति तदा पूर्वमपि कार्यं भवति तत्फलितार्थपरमेव—'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति वचनं बोध्यम्। तेन 'भिन्धकि' इत्यादौ परत्वाद्धौ कृतेऽकचः प्रवृत्तावपि न धिभाववैयर्थ्यमिति पुनः प्रसङ्गन्यायेनाकज् भवतीति भावः। वस्तुतस्तु परशास्त्रप्रवृत्तिवैयर्थ्याभावे एव पूर्वशास्त्रप्रवृत्तिरिति नायं विषयः 'पुनः प्रसङ्ग' न्यायस्य, तथा सति 'भिन्धि' इत्यादौ परत्वात्तातङि कृते यदि पुनःप्रसङ्गन्यायेन धिभावस्तदा तातङ्प्रवृतिवैयर्थ्यमेवेति न पुनः प्रसङ्गन्यायः प्रवर्तेत, अपि तु यथा 'अकृतकारि खल्वपि शास्त्रमग्निवत्' 'कृतकारि खल्वपि शास्त्रं पर्यन्यवत्' द्वौ न्यायौ लक्ष्यानुरोधाद्व्यवस्थितौ तथा इमावपि न्यायौ लक्ष्यानुसारिणाविति बोध्यम्, तेन 'भिन्धि' इत्यत्र परस्य तातङः प्रवृत्तेर्वैयर्थ्यप्रसङ्गेऽपि पुनः प्रसङ्गन्यायेन धिर्भवत्येवेति तत्त्वम्।

कार्ये परत्वञ्च परशास्त्रविहितत्वरूपं बोध्यम्। कार्यकालपक्षेऽपि अष्टाध्यायी पाठकृतपरत्वमेव परिभाषाप्रवृत्तिनियामकमवसेयम्। एतेन यथोद्देशपक्षे एव परिभाषयोः पौर्वापर्यं न तु कार्यकालपक्षे इति कैयटोक्तं न युक्तमिति सूचितम्। अतः

'ङमो ह्रस्वादचि' इति त्रिपादीस्थकार्यकालपक्षे प्रवृत्तयोः 'तस्मिन्निति' 'तस्मादिति' इति द्वयोरपि परिभाषयोरेकदेशस्थत्वेऽपि परत्वात् 'तस्मादित्युत्तरस्य' इत्यनेनैव व्यवस्था इत्यपि संगच्छते। अर्थात् त्रिपादीस्थेन शास्त्रेण विरुद्धपरिभाषाद्वयमध्ये परैवाकृष्यते न पूर्वेति भावः। संज्ञानान्तु कार्यकालपक्षे प्रदेशे एव पदैकवाक्यतया वाक्यार्थबोधेन तद्बोधोत्तरमेव विरोधप्रतिसन्धानं कार्यज्ञानञ्चेति प्रदेशदेशीयपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ नियामकम्। अत एव 'अयादिभ्यः परैव प्रगृह्यसंज्ञा' इति भाष्ये उक्तम्। परिभाषाणान्तु कार्यकालपक्षेऽपि स्वस्वदेशेऽर्थबोधोऽस्त्येवेति तासां पाठकृतमेव परत्वम् एतत्सूत्रप्रवृत्तौ निमित्तमिति सारम्। न च 'गुणानाञ्च परार्थत्वात्' इति न्यायेन विप्रतिषेधसूत्रस्यापि परिभाषात्वात् कथं परिभाषान्तरविषये नियामकत्वमस्येति वाच्यम्? अस्य परिभाषात्वेऽपि कार्यग्रहणेन कार्यमात्रस्यैव ग्रहणात् तस्य 'तस्मिन्' 'तस्मात्' इति परिभाषयोरपि व्यवस्थापकत्वे दोषाभावात्। एवञ्च विप्रतिषेधपरिभाषा यथोद्देशपक्षे एव स्थितेति फलितम् त्रिपाद्यां कार्यकालपक्षेऽपि अप्रवृत्तेः पूर्वदृष्टया परात्वस्थानाभावात् तदुक्तं 'पूर्वत्रासिद्धे नास्तिविप्रतिषेधः अभावादुत्तरस्येति दिक्।

## अथ अजन्तपुँल्लिङ्गप्रकरणम् ॥ ७ ॥

**४४ प्र०—प्राचीनमतेनार्थवत्त्वं परिष्कृत्य तत्परित्यागबीजप्रदर्शनपुरस्सरं—सपदकृत्यं नव्यमतेनोभयसूत्रसाधारणमर्थवत्त्वं परिष्क्रियताम्।**

उ०—अर्थवत्सूत्रेऽर्थविषयकबोधजनकत्वमर्थवत्त्वम्। 'कृत्तद्धितान्तञ्चैवार्थवच्च केवलाः कृतस्तद्धिता वे'ति भाष्यात् 'कृत्तद्धिते'ति सूत्रे (शब्दाधिकाराश्रयणेन) एकार्थीभावेन लौकिकप्रयोगे प्रसिद्धत्वमर्थवत्त्वमिति **प्राचीनाः**।

परन्त्वत्रमतेऽर्थवत्त्वोपस्थितिद्वयस्य विभिन्नरूपेण बोधद्वयस्प्रति कारणत्वकल्पनेन, प्रत्ययपर्युदासस्य कर्त्तव्यत्वेन, उपस्थितेर्योग्यताज्ञानादिकारणसहिताया एव कार्योत्पादकतयैतन्मते प्रत्ययभिन्नोपस्थितेराधिक्येन योग्यताज्ञानार्थवत्त्वोपस्थितिस्थाने योग्यताज्ञानार्थवत्त्वोपस्थितिप्रत्ययभिन्नोपस्थितीनां प्रवेशेन तेषां विशेष्यविशेषणभावे विनिगमनाविरहात् कारणताषाड्विध्येन च नितरां गौरवमिति तत्परित्यज्य सूत्रद्वये—'एतत्संज्ञाफलभूतविभक्तीतरसमभिव्याहारानपेक्षयाऽर्थविषयकबोधजनकत्वरूपमर्थवत्त्वमङ्गीचक्रुर्नवीनाः।

( एवञ्च प्रकृतिसमभिहारापेक्षयैवार्थविषयकबोधजनकत्वेन प्रत्ययस्यार्थवत्त्वाभावादेव प्रातिपदिकत्ववारणसम्भवेऽप्रत्ययपर्युदासाकर्त्तव्यत्वेन लाघवम् )।

ननु 'खट्वा' 'पक्त्रिमम्' 'साङ्कूटिनमि'त्यादौ खट्व-पक्त्रि-साङ्कूटिन् इत्यादीनामेत्संज्ञाफलभूतविभक्तीतरेषां टाप्-मप्-अणां समभिहारेणैवार्थविषयकबोधजनकत्वादर्थवत्त्वं न स्यात्। नच विभक्तिपदस्य प्रत्ययपरत्वान्न दोष इति वाच्यम्, इन्द्राणीत्यादाविन्द्रेत्यस्य या प्रातिपदिकसंज्ञा तत्फलभूतप्रत्ययेतर आनुगागमस्तत्समभिहारापेक्षत्वेन प्रातिपदिकत्वानुपपत्तेः। न चैतत्संज्ञाफलभूतेतरस्यैव विवक्षणान्नानुपपत्तिरिति वाच्यम्, एधाञ्चक्र इत्यादावेधामित्यस्य या प्रातिपदिकसंज्ञा तत्फलभूतेतर-चक्रे-समभिव्याहारापेक्षयैवार्थवत्त्वेन प्रातिपदिकत्वोपयोग्यर्थवत्त्वाभावेनाप्रातिपदिकत्वात्सोरनुत्पत्तौ पदत्वानापत्त्या 'वा पदान्तस्ये'त्यनेन वैकल्पिकपरसवर्णानापत्तेः। न चैतत्संज्ञाफलभूतस्थाने एतन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयस्य निवेशेन न काऽपि क्षतिरिति वाच्यम्, कुम्भकार इत्यादौ कारेत्यस्य स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतर-कुम्भसमभिहारेणैवार्थविषयकबोधजनकत्वात्प्रातिपदिकत्वानापत्तेः। न च तादृशविधेयताश्रयेतरो यः पदेतरस्तत्समभिहारेत्याद्यर्थेन न दोष इति वाच्यम्, पञ्चगवधन इत्यादौ पञ्चगवेत्यस्य धनापेक्षयार्थविषयकबोधजनकत्वेऽपि धनस्य पदेतरत्वाभावादर्थवत्त्वेन प्रातिपदिकत्वापत्तेरिति चेन्मैवम्, शब्दविशिष्टत्वमर्थवत्त्वमिति स्वीकारेणादोषात्। वै० स्वतादात्म्य—स्वविशिष्टसमभिहारानपेक्षबोधजनकत्वैतदुभयसम्बन्धेन। तत्र वै० स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्व-स्वावधिकपूर्वपदेतरत्वोभयसम्बन्धेन एवञ्चैतच्छब्दघटितत्वेनाननुगमशङ्कापि न पदशब्देन स्वादिष्वितिपदत्वाभाववत्सुबन्तस्यैव ग्रहणेन हरिषु-अत्रिषु-इत्यादौ न काप्यनुपपत्तिरिति दिक्।

**४५ प्र०—'कृत्तद्धितसमासाश्च' इति सूत्रे समासग्रहणस्य कथं नियमार्थं, कथं वा नियम्यशास्त्रे सङ्कोचः, कीदृशश्च निर्दोषो नियमाकारः, इत्येतत्सर्वं शेखरोक्तदिशा, साधुनिरूप्यताम्।**

**उ० अयं भावः**—अर्थवत्सूत्रेऽप्रत्ययघटकप्रत्ययांशे 'प्रत्ययग्रहणपरिभाषया तदादितदन्तोपस्थितौ 'स्वनिष्ठचरमावयवतानिरूपकत्व-स्वनिष्ठविधेयतानिरूपितोद्देश्यताऽश्रयनिष्ठावयवतानिरूपकत्वैतदुभयसम्बन्धेन प्रत्ययविशिष्टरूपो यः प्रत्ययादादिः तद्भिन्नस्य प्रातिपदिकसंज्ञेत्यर्थेन 'राजन्-अम्-पुरुष-सु' इत्यादौ समासे

-तादृशप्रत्ययान्तदादिभेदस्य सत्त्वेनार्थवत्सूत्रेणैव प्रातिपदिकत्वसिद्धौ समासग्रहणं व्यर्थं सन्नियमार्थम् ।

'एवञ्च'—नियम्यत्वेनाभिमतशास्त्रीयविधेयतावच्छेदकरूपावच्छिन्नविधेयताकत्वे सति तदीयोद्देश्यतावच्छेदकरूपव्याप्यरूपावच्छिन्नोद्देश्यताकत्वं नियामकत्वमिति सिद्धान्तेन तादृशस्थले नियामकशास्त्रेण नियम्यशास्त्रे सङ्कोचे विघातको नियामकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्नातिरिक्तत्वेन, तादृशरूपव्याप्यरूपावच्छिन्नातिरिक्तत्वेन वा सङ्कोचः कर्तुं न शक्यते, स्नुषाश्वश्रून्यायप्रसङ्गात् , नापि नियम्यशास्त्रीयोद्देश्यतावच्छेकावच्छिन्नातिरिक्तत्वेन तादृशरूपव्यापकरूपावच्छिन्नातिरिक्तत्वेन वा, नियम्यशास्त्रवैयर्थ्यापत्तेः, किन्तु नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन सङ्कोचः कर्त्तव्यः ।

तथा च नियमशास्त्राणां निषेधमुखेन प्रवृत्तिरिति **प्राचां मते** नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापको यो नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्यो धर्मस्तद्धर्मावच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकधर्मावच्छिन्नातिरिक्तरूपस्वविधेयाभावो बोध्यते । तादृशनियामकशास्त्रीयोद्देश्यतावच्छेदक-समासत्वव्यापको नियम्यार्थवत्सूत्रीयोद्देश्यतावच्छेदकधातुप्रत्ययभिन्नार्थवत्त्वव्याप्यो धर्मश्च प्रकृते पूर्वभागपदघटितसमुदायत्वं, तदवच्छिन्नस्य स्वीयोद्देश्यतावच्छेदकसमासत्वावच्छिन्नातिरिक्तस्य वाक्यस्य स्वविधेय-प्रातिपदिकत्वाभावोऽत्रेति समासग्रहणाज्ज्ञायते ।

नियमस्य निषेधमुखेन प्रवृत्तौ प्राप्तबाध-स्वार्थत्याग-परार्थकल्पनादिदोषप्रसङ्ग इति नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिरिति ।

**नवीनमते** तु-नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापक-नियम्यशास्त्रीयोद्देश्यतावच्छेदकव्याप्य-धर्मार्थवच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः । तथाहि-प्रकृते-अर्थवच्छास्त्रीयोद्देश्यतावच्छेदक-धातुप्रत्ययादिभिन्नार्थवत्त्वव्याप्य-नियामक-कृत्तद्धितेति-शास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापक-पूर्वभागपदघटितसमुदायत्वरूपधर्मावच्छिन्नातिरिक्तत्वेनार्थवत्सूत्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचेन पूर्वभागपदघटितसमुदायरूपे वाक्ये समासे चार्थवत्सूत्रेणाप्राप्ता प्रातिपदिकसंज्ञा समासग्रहणेन समासे विधीयत इति ।

स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावयवकः, स्वातन्त्र्येण प्रयोगार्हार्थवदुत्तरावयवकः, अर्थविषयकबोधौपयिकाङ्क्षापर्याप्त्यधिकरणञ्च यः समुदायस्तस्य चेत्तर्हि-समासस्यैवेति निर्दोषो नियमाकार इति दिक् ।

४६ प्र०—समासग्रहणसिद्धिनियमाकारं निर्दोषमुपपाद्य सुवन्तानामिति सरूपसूत्रस्थभाष्यविरोधं समाधाय यथाश्रुतमूलोक्तनियमपरित्यागे बीजं वर्णनीयम्।

उ०—समासग्रहणसिद्धनिर्दोषो नियमाकारस्तु पूर्वतोऽनुसन्धेयः।

ननु वाक्ये संज्ञावारणायार्थवत्समुदायान्तमिति नियमशरीरमुक्त्वा 'बहुपटव' इत्यादौ दोषमाशङ्क्य 'सुवन्तानां समुदायस्य समासग्रहणं नियमार्थ'मिति भाष्ये सम्पादितम्, एवञ्च 'स्वातन्त्र्येण प्रयोगार्हार्थवत्पूर्वावय, इत्यादि निरुक्तनियमाङ्गीकारे तद्भाष्यविरोधः स्पष्ट एवेति चेन्न, 'सुवन्ताना'मित्यनेन 'भेदसंसर्गद्वारका अर्थवन्त उपलक्ष्यन्ते' इति कैयटेन स्पष्टमुक्तत्वात्। तथा भेदे 'प्रवृत्तिनिमित्तभेदे सत्याकाङ्क्षासंसर्ग इतरान्वयस्तद्वारकार्थवन्त इत्यर्थेन तन्नियम एव पर्यवसानमित्यवसेयम्।

'अश्वक्रीती'त्यादौ 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्ते' रिति वचनात्सुवन्तासुवन्तानामपि समासदर्शनेनोक्तार्थस्यैव सजातीयत्वात्।

गवित्ययमाहेत्यादावनुकरणस्थले गो इत्यादीनां सुवन्तत्वाभावेन पदत्वाभावात् नियमानाक्रान्ततया समुदायस्य प्रातिपदिकत्वापत्तिर्मूलोक्तनियमे दोषः 'वृषण्वसुः' 'वृषणश्वः' इत्यादौ समासत्वस्य सत्त्वेऽपि 'वृषण्वस्वश्वयो'रिति वार्त्तिकेन वृषणित्यस्य भत्वात् नियामकशास्त्रीयोद्देश्यतावच्छेदकसमासत्वव्यापकत्वस्य पदपूर्वावयवकसमुदायत्वे विरहेण तेन रूपेण साजात्यासम्भवः प्रत्ययग्रहणपरिभाषायाः 'देवदत्तो गार्ग्ये'ति समुदायस्य यञन्तत्वेन प्रातिपदिकसंज्ञाभावस्य फलत्वेनोपन्यासपरभाष्यविरोधश्च मूलोक्तनियमपरित्यागे बीजमिति दिक्।

४७ प्र०—शेखरोक्तदिशा प्रातिपदिकाधिकारस्य वैयर्थ्यमुपपाद्य खण्डनीयम्।

उ०—ननु परत्वस्यावध्यंशे नित्यसाकाङ्क्षत्वात् 'परश्चे'त्यनेनैव प्रकृतेराक्षेपात्सर्वोपपत्तौ प्रातिपदिकाधिकारो निरर्थकः।

न च तिङन्ते प्रातिपदिकार्थाभावेन प्रथमाविधेस्तत्रादोषेऽपि 'पचति' 'पश्ये' त्यादौ क्रियायाः कर्मादिमत्त्वेन तद्वाचकतिङन्ताद् द्वितीयापत्तिरिति वाच्यम्, सङ्ख्यावच्छिन्नेऽन्यसङ्ख्याभावात्। सर्वतिङन्ते सुवन्तत्वेनैव पदत्वे सिद्धे 'सुप्तिङन्त' मित्यत्र तिङ्ग्रहणवैयर्थ्यापत्तेश्च। तिङामपवादत्वादेव धातुभ्यो न सुबुत्पत्तिः।
'तस्येत्यादिसमर्थविभक्तिनिर्देशात् 'तिङन्ताच्छ्रितश्चेत्स्वादिरेवेति' नियमद्वारा

'तिङश्चे'ति ज्ञापकाच्च न तिङन्तेभ्यस्तद्धितप्रत्ययसम्भावनापीति चेन्न, 'स्वार्थद्रव्यलिङ्गसङ्ख्याकारकप्रयुक्तकार्य्यैः (क्रमेण) संस्कृतस्य वहिर्भूतापत्यादियोग' इति 'कुत्सिते' इति सूत्रभाष्योक्तन्यायेन, 'तस्यापत्य' मित्यादौ तत्सम्बन्ध्यपत्यमित्यर्थे प्रथमोच्चारितबोध्यबोधकात्प्रत्यय इत्यर्थस्य वर्त्तमानत्वेन च सार्थकतद्धितानां सुवन्तादुत्पत्त्या 'अनुदात्तादे'रित्यस्य प्राधान्यादुपस्थितसुवन्तविशेषणत्वापत्तौ 'सर्वस्य विकारः सार्व' इत्यत्र 'सर्वस्य सुपी' त्याद्युदात्तत्वादञनापत्तेः।

तदधिकारे तु—तत्सामर्थ्यात्प्रातिपदिकस्यैव तद्विशेषणमिति सर्वशब्दस्योञ्छादिपाठेनान्तोदात्तत्वादिष्टसिद्धिः।

न च सुवन्तविशेषणत्वेऽपि—लुक इव तदुपजीव्यस्य कार्य्यस्यापि प्राबल्यबोधकेनान्तरङ्गानपीति न्यायेन लुङ्निमित्तकादञ् प्रत्ययात्पूर्वमाद्युदात्ताप्राप्त्या न निरुक्तदोष इति वाच्यम्, धर्मिग्राहकमात्रादन्तरङ्गनिमित्तविनाशकलुक एव तेन प्राबल्यबोधनेन प्रकृते सुपो लुक्यपि प्रत्ययलक्षणेन सुवन्ततया तस्यान्तरङ्गनिमित्तविनाशकत्वाभावात्। 'न लुमते'ति निषेधस्तु न शङ्क्यः, स्वरसम्बन्धिनीनां सप्तमीनां तदन्तसप्तमीत्वात् 'सर्वस्य सुपी'त्यत्र सुवन्तेत्यर्थेन प्रत्यये परतः पूर्वकार्य्यत्वाभावेन तदप्रवृत्तेः। अनुदात्तादिप्रकृतिकषष्ठ्यन्तादित्यर्थस्तु न समीचीनः, लक्षणायां प्रमाणाभावादिति दिक्।

**४८ प्र०—सरूपसूत्रेऽपकृष्टैवकारार्थस्य काऽन्वयो भवतीति विशदं निरूप्यैवकारापकर्षो निरस्यताम्।**

**उ०—अयं भावः**—न तावत्सरूपपदार्थे एवकारार्थान्वयः, तथा सति सारूप्यवदारब्धसमुदायघटकः सारूप्यवदारब्धसमुदायेतराघटक एकः शिष्यते—इत्यर्थे मातृमात्रोरापत्तिवारणाभावादेवकारापकर्षस्य वैयर्थ्यापत्तेः। नापि सरूपेऽन्वयः, तावताऽपि सरूपारब्धस्सरूपेतरानारब्धो यस्समुदायस्तद्घटक इत्यर्थेऽप्युक्तदोषतादवस्थ्यात्। एकमातृशब्दस्यापरमातृशब्दसरूपत्वेन सरूपेतरत्वाभावान्नापि सारूप्येऽन्वयः। तथा च सारूप्यमेव येषान्तैरारब्धो यस्समुदाय इत्याद्यर्थेऽपि पूर्वदोषस्यावारणादिति चेन्मैवम्, सरूपपदस्य च शब्दविशिष्टसमुदायोऽर्थस्तत्रैवकारसम्बन्धस्य तात्पर्यग्राहकत्वेनोपयोगात्। वै० स्वारब्धत्व-स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्वोभयसम्बन्धेन। तत्र वै० स्वभिन्नत्व-स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन। न च जरसादेशस्य वैकल्पिकत्वेनैकस्य ङेपरे जरसत्वमपरस्य जरात्वमित्येकशेषानापत्तिः, तद्वारणाय स्वसामानाधिकरण्य-

स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वनिवेशेऽपि नित्यद्विवचनान्तपुष्पवन्तशब्दस्य नित्यैकवचनान्तैकशब्देन सहैकशेषापत्तिरिति वाच्यम्, स्वारब्धत्व-स्ववृत्तिरूपविशिष्टरूपवदनारब्धत्व-स्ववृत्तिरूपाभाववदनारब्धत्वैतत्त्रितयसम्बन्धेन शब्दविशिष्टसमुदायघटक एकः शिष्यत इति निष्कृष्टार्थात्। सम्बन्धघटकवैशिष्ट्यञ्च-स्वविशिष्टभिन्नत्व-स्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन तत्र वैशिष्ट्यञ्च-स्वसामानाधिकरण्यस्वाश्रयप्रकृतिकविभक्तिसजातीयविभक्त्यव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेनेति **मैथिलमिश्रचरणा** इति दिक्।

**वस्तुतस्तु**—एवकारापकर्षो न युक्तिसहः। अत एव 'प्रातिपदिकैकशेषे मातृमात्रोः प्रतिषेधो वक्तव्यः' माता च जनयित्री, माता च परिच्छेत्ता, उभयोरपि क्वचित्सादृश्यं दृश्यते' इति प्रातिपदिकैकशेषकल्प एव भाष्ये शङ्का कृता, न तु विभक्त्यन्तैकशेषादिकल्पे। अन्यथा तत्र कल्प इव तेष्वपि कल्पेषु 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति वचनमावश्यकं स्यात्। अत एव 'किमुच्यते प्रातिपदिकैकशेषे 'मातृमात्रोः प्रतिषेधो वक्तव्य' इति? न पुनर्यस्यापि विभक्त्यन्तानामेकशेषः—तेनापि मातृमात्रोः प्रतिषेधो वक्तव्यः स्यात्, तस्यापि ह्येतानि क्वचिद्विभक्त्यन्तानि सरूपाणि-'मातृभ्याञ्च, मातृभ्याञ्चे'ति। 'अथ मतमेतत्' विभक्त्यन्तानां सारूप्ये भवितव्यमेकशेषेणेति, प्रातिपदिकानामेकशेषे दोषो भवतीति भाष्यं सङ्गच्छते। अन्यथा एकस्यैव सूत्रस्य व्याख्याभेदेनैकस्यैव लक्ष्यस्य साधुत्वमसाधुत्वञ्च स्यात्। एतद्भाष्यैकवाक्यतया—'मातृमात्रोः प्रतिषेधो वक्तव्य इति सामान्यत आरब्धमपि वार्त्तिकं—सर्वनामविभक्तिपरत्वविषयकम्बोध्यम्। अन्यथा विभक्त्यन्तैकशेषवादिमते 'मातृभ्या'मित्यादावेकशेषो भवति, प्रातिपदिकैकशेषवादिमते-एकशेषो न स्यादिति फलभेदः स्यात्। तथा च जननीपरिच्छेत्तृवाचकयोर्भ्यामि सारूप्यसत्त्वात्—प्रातिपदिकैकशेषवादिमतेऽप्येकशेषो भवत्येव, केवलं सर्वनामस्थान एव न भवति, तत्र वैरूप्यात्। न च 'मातृमात्रोः प्रतिषेध' इति वार्त्तिके एकशेषाकरणेन एवकारापकर्षोऽस्तीति गम्यते, अन्यथा भिसि जननीपरिच्छेत्तृवाचिनोः सारूप्यस्य सत्त्वेन 'मात्रोः प्रतिषेधो वक्तव्य' इत्येवं वक्तव्यं स्यादिति वाच्यम्, अनुकरणस्वरूपभङ्गभियैकशेषाकरणेनादोषादिति दिक्।

**४९ प्र०—सरूपसूत्रस्य नियमार्थत्वमुपपाद्य नियमाकारप्रदर्शनपुरस्सरं नियमफलम्प्रदर्श्य सहविवक्षाविषयकत्वञ्चास्य केन प्रमाणेनेति प्रतिपाद्यविभर्व्याख्याऽस्य सूत्रस्य स्पष्टं विधीयताम्।**

उ०—अयम्भावः—'अक्षो भज्यतां भुज्यतां दीव्यता'मित्यादौ पृथक्-पृथगन्वयेन सहविवक्षाविरहादेकशेषेणानिर्वाहात्तदर्थमावश्यकेन 'स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण—तुल्यरूपत्वे सति अनेकार्थबोधकत्वरूपतन्त्रेणैव सिद्धेः सरूपसूत्रं व्यर्थं सन्नियमार्थम् 'सरूपाणामेकशेष एवे'ति । तत्फलन्तु—यावत्यः प्रवृत्तिनिमित्तनिष्ठप्रकारतास्तावच्छब्दप्रयोगस्याऽपि (प्रत्यर्थं शब्दाभिनिवेशस्यापि) 'घटोऽयं घटोऽयं घटोऽय'मिति भाष्यादौ दर्शनेन तादृशस्थले प्राप्तद्वन्द्वनिवारणमेव । असौ च नियमो विभक्तौ यानि सरूपाण्येव तद्विषयः, सहविवक्षाविषयश्च । (तत्र पूर्वोऽर्थ एवकारलभ्यः ।)

'तिष्यपुनर्वस्वो'रिति सूत्राद्द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सत्येकशेष इत्यर्थेन 'विभक्त्यन्तानामेकशेष' इति पक्षे 'द्वन्द्वप्रतिषेधो वक्तव्य' इत्याशङ्क्य 'अनवकाश एकशेषो द्वन्द्वं वाधिष्यते' इति भाष्येण 'सारवसारवोर्मिज' इत्यादिमहाकविप्रयोगेण चास्य सहविवक्षाविषयकत्वं स्पष्टमेव प्रमितं भवतीत्यवसेयम् ।

भाष्यकृतस्तु—'अर्थावर्थौ प्रत्यर्थान् अर्थान्प्रति च यत्तदपि प्रत्यर्थमेवे'ति पक्षं समाश्रित्य सूत्रमिदं प्रत्याचख्युः । नचार्थमर्थम्प्रति यत्तदपि प्रत्यर्थमेवेति 'घटा घटा' विति द्वन्द्वः प्राप्नोति प्रत्याख्यानपक्षे इति वाच्यम्, अभिधानस्वाभाव्यादेकस्यैवानेकार्थस्य साहित्ये वृत्तेरङ्गीकारेण अनेकघटादिपदानां साहित्ये वृत्तेरनभिधानादिति दिक् ।

५० प्र०—भाष्यवार्तिकयोर्मतभेदेनादर्शेनेत्यत्र णत्वं वार्य्यताम् ।

उ०—ननु 'अट्कुप्वाङ्' इति सूत्रतोऽडादिव्यवाये णत्वमित्यर्थस्यैव सूत्रतो लाभेनाडाद्यतिरिक्तव्यवाये निषेधासद्भावात् 'आदर्शेन' इत्यत्राडाव्यवायसत्त्वान्नस्य णत्वं स्यादिति चेन्न, रषाभ्यामिति पञ्चमीनिर्देशेनोपस्थितया 'तस्मादित्युत्तरस्ये'ति परिभाषयाऽव्यवहितत्वोपस्थिते रेफषकाराव्यवहितोत्तरस्य नस्य णत्वमित्यर्थेन लब्धस्य रेफनकारयोः षकारनकारयोश्च वर्णान्तरकर्त्तृकव्यवधानशून्यत्वस्य 'अट्कुप्वाङ्नुम्व्यवाये' इत्यनेन लब्धस्याडादिवर्णकर्त्तृकव्यवधानत्त्वस्य च परस्परं विरोधात्सूत्रवैयर्थ्यापत्त्या 'अट्कुप्वाङ्नुम्व्यवायेऽपीत्यनेन वर्णान्तरेऽडाद्यतिरिक्तत्वमात्रबोधनेन अट्कुप्वाङ्नुम्भिन्नवर्णकर्त्तृकव्यवधानशून्यस्य रषाभ्याम्परस्य नस्य णत्वमित्यर्थस्यैव पर्यवसितत्वात् । एवञ्चादर्शेनेत्यत्राडाद्यतिरिक्तशकारव्यवायान्न णत्वम् । एतादेवाभिप्रेत्य भाष्यकृतोक्तम्—'णत्वेऽन्यव्यवाये प्रतिषेधो वक्तव्यो, न वाऽन्येन व्यवहितत्वादि'ति वार्त्तिकमतम् ।

भाष्ये तु—'ऋवर्णान्नस्ये'त्यस्य प्रत्याख्यानाय 'व्यवाये' इति योगः, व्यवाये णत्वमिति तदर्थस्तेन मातृणामित्यादौ ऋकारैकदेशाज्भागव्यवहितस्य रेफात्परस्य नस्य णत्वसिद्धिः, अनेनैव योगेन सिद्धेऽट्कुप्वाङ्नुमिति आक्षरसमाम्नायिकैर्व्यवाये चेदडादिभिरेव व्यवाय इति नियमार्थन्तेन—आदर्शेनेत्यादौ न णत्वप्राप्तिरित्युक्तमिति दिक् ।

**५१ प्र०—'नामी'ति सूत्रे आमीति न्यासेन कथन्नेष्टसिद्धिरिति सविशदं शेखरोक्तदिशा विवेचनीयम् ।**

उ०—ननु लाघवान्नामीत्यत्रामीत्येव न्यासोऽस्तु, परत्वान्नुटि यदागमन्यायेनाम्त्वमादाय दीर्घे रामाणामित्यादेः सिद्धत्वात् । न चैवं न्यासे 'राम—आमि' त्यवस्थायां नित्यत्वान्नुटः पूर्वं दीर्घे ह्रस्वान्तत्वाभावान्नुट् न स्यादिति वाच्यम्, ह्रस्वान्तान्नुडिति वचनसामर्थ्यात्सरूपाणामित्यादिनिर्देशाच्च भूतपूर्वह्रस्वान्तत्वमादाय नुट्सिद्धेरप्रत्यूहत्वात् । न च 'नृ चे'ति दीर्घविकल्पाद्दीर्घाभावपक्षे नृणामित्यत्र नुडर्थं ह्रस्वग्रहणं सफलमिति न तत्सामर्थ्याद्भूतपूर्वगत्याश्रयणं युक्तमिति वाच्यम्, 'नृन-द्याप' इति न्यासेनापि तत्र नुटसिद्धिसम्भवात् ह्रस्वान्तात्परस्यामो नुड्विधानस्य वैयर्थ्येन भूतपूर्वगत्याश्रयणे क्षतिविरहात् । अत एव भाष्ये—सामान्यधर्मावच्छिन्नोद्देश्यताकं शास्त्रमेकमुदाहरणं न प्रयोजयतीत्यर्थकं नैकमुदाहरणं योगारम्भं प्रयोजयती'त्युक्तम् । न चैवमपि 'न तिसृ' इति निषेधे तिसृणामित्यादौ सावकाशस्य ह्रस्वग्रहणस्य वैयर्थ्योपपादनं न समीचीनमिति वाच्यम्, 'षट्चतुर्भ्यश्चे'त्यत्र त्रेरित्यनुवृत्त्या त्रिशब्दात्परस्यामो नुड्विधानेन तिसृणामित्यस्य सिद्धेः ।

न च प्रियत्रीणामित्यादौ 'षट्चतुर्भ्यश्चे'ति बहुवचननिर्देशेनार्थपरनिर्देशात् अडाद्यर्थगतबहुत्वबोधकस्यामो नुडित्यर्थेनास्य नुटो 'गौणेऽप्रवृत्त्या नुडर्थं ह्रस्वग्रहणमिति वाच्यम्, 'षट्चतुर्भ्या'मिति द्विवचननिर्देशे गौरवेण लाघवाद्बहुवचननिर्देशस्यौचित्यात् । गौणेऽप्रवृत्तौ प्रमाणाभावाच्च । समाहारद्वन्द्वेन निर्देशे विधातव्ये बहुवचननिर्देशो गौणेऽप्रवृत्त्यर्थ इत्यपि नौचित्यं कलयति 'अस्थिदधि' 'तिसृभ्यो जस' इत्यादौ व्यभिचारात् । न 'चाङ्गाधिकारे पञ्चम्या यदुच्यते गृह्यमाणविभक्तेस्तद्भवती'ति भाष्याद् गृह्यमाणाद्विहितविभक्तेरित्यर्थकादस्य नुटो गौणेऽप्रवृत्तिः, ननु 'षड्भ्य' इत्यत्रापि तदधिकारसत्त्वेन षट्संज्ञकाद्विहितयोरेव जश्शसोर्लुकि परमपञ्चेत्यत्र लुक् न स्यात्, नान्तसंख्यावाचकत्वस्य पञ्चमात्रे सत्त्वेन तस्यैव षट्त्वेन तद्विहितत्वाभावादिति चेन्न, [illegible]जन-

कस्य षान्तस्य नान्तस्य च संज्ञेत्यर्थेन परमपञ्चेत्यस्य कर्मधारयसमासेन परमाभिन्नपञ्चत्वसंख्याविशिष्टार्थकत्वेन-तस्यैव षट्त्वेन ततो विहितस्य जशो लुग्विधाने बाधकाभावात्। भाष्येऽपि निरुक्तशङ्कायास्समाधानपरेण 'षट्प्रधान एष समास' इति ग्रन्थेनोक्तार्थस्यैव ध्वननादिति वाच्यम्, 'न ह्येकमुदाहरणं योगारम्भं प्रयोजयती'ति नामिसूत्रस्थभाष्यात् 'षट्संज्ञकादिभ्यः परस्याङ्गसंज्ञानिमित्तस्यामो नुडित्यर्थस्यैव सत्त्वेन गौणेऽपि नुटः प्रवृत्तौ क्षतिविरहात्। 'षड्भ्यो लुक्' 'अदड्डतरादिभ्य' इति सूत्रद्वयस्यैव लक्ष्यानुरोधात् षट्संज्ञकाद्विहितयोः डतराद्यन्ततदादिविहितयोरित्यर्थः। तेन प्रियपञ्चानः अतिकतरम् इत्यादौ न लुगदड्डौ। नच भूतपूर्वगत्याश्रयणे पदां दतामित्यादौ स्थानिगतह्रस्वान्तत्वमादाय नुडापत्तिरिति वाच्यम्, मात्राकालिकत्वे सत्यच्त्वस्यैव ह्रस्वपदशक्यतावच्छेदकतया सामर्थ्यान्मात्राकालिकत्वांश एव भूतपूर्वगत्याश्रयेणाच्त्वस्य वर्त्तमानस्यैव निमित्ततयाग्रहणेन प्रकृते तद्विरहेण दोषाभावादिति चेन्न, एवं सति 'नोपधाया' इत्यत्राप्यामीत्यस्यैव सम्बन्धे चर्मणामित्यादौ मकाराकारस्य दीर्घापत्तेरिति दिक्।

**५२ प्र०—अन्यथासिद्धिपरिहारप्रदर्शनपुरस्सरमुभशब्दस्य सर्वादिगणे पाठे फलमुपदर्श्य भाष्यरीत्या तदन्यथासिद्धिः स्पष्टं वर्णनीया।**

उ०—ननु द्विवचने परे सर्वनामसंज्ञाप्रयुक्तकार्याणामभावेन सर्वादिगणे तस्य पाठो व्यर्थः। न च 'सर्वनाम्नस्तृतीया चे'ति सूत्रेणोभाभ्यां हेतुभ्यामुभयोर्हेत्वोरिति षष्ठीतृतीयासिद्धिस्तत्फलमिति वाच्यम्, 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनमिति वार्त्तिकेनैव गतार्थत्वात्। तस्य सर्वनामसंज्ञासापेक्षत्वन्तु न, भाष्ये 'हेता'विति सूत्रे तत्पाठात्।

नचोभकावित्यत्राकजर्थ एव पाठोऽस्त्विति वाच्यम्, कप्रत्ययेनापि तत्सिद्धेः। नचोभकाभ्यामित्यत्र सुवन्तात्तद्धितोत्पत्त्याऽकचि चितस्सप्रकृतेरित्यनेन चित्त्वप्रयुक्तमन्तोदात्तत्वं भ्याम आकारस्य कप्रत्यये प्रत्ययत्वप्रयुक्तमन्तोदात्तत्वं कप्रत्ययाकारस्येति फलभेद इति वाच्यम्, तद्धितविधौ प्रातिपदिकाधिकारात्, प्रातिपदिकस्यैव प्रकृतित्वम्, प्रत्ययविधावुद्देश्यतावच्छेदकाक्रान्तस्यैव प्रकृतित्वात्। जायमानश्च तद्धितः 'स्वार्थे परिपूर्णमिति न्यायात्सुबन्तात्पर एवेत्यन्यदेतदिति प्रत्ययत्वचित्त्वाभ्यां ककाराकारस्यैवोदात्तत्वेन फलभेदाभावादिति चेन्न, अकचि तन्मध्यपतितन्यायेनोभकशब्दस्योभशब्देन ग्रहणादुभशब्दस्यैव द्विवचनपरत्वमनावश्यकम् न भवति कप्रत्यये तु

तदन्ते द्विवचनपरत्वेऽपि तस्य द्विवचनपरत्वाभावेनायच् स्यादित्युभयकाविति स्यादि-ष्यते चोभकाविति तदर्थं पाठस्यावश्यकत्वात् ।

ननु 'संख्याया अवयवे तयपि'त्यवयवे विहितस्य तयपः स्थाने 'उभादुदात्तो नित्यमि'त्यनेनायजादेशस्य विधानेनोभकावित्यत्रावयवार्थानवगमेन तयपोऽभावेनाय-चोऽप्राप्तिरिति चेदत्रोच्यते उभय इत्यादौ 'तयपादेशे उभयप्रतिषेधः, तयपो ग्रहणेन ग्रहणाज्जसि विभाषाप्राप्नोती'ति वार्त्तिकप्रत्याख्यानायायचः प्रत्ययान्तरत्वमुक्तं भाष्ये तथाचोभावयवौ यस्येति वाक्यस्य सिद्धये 'उभादुदात्तो नित्यमि'ति सूत्रे महावि-भाषासम्बन्धस्यावश्यकत्वेन परस्परं विरोधात् नित्यमिति योगो विभज्यते । एवञ्चो-भादुदात्त इत्यस्योभशब्दादवयवित्यर्थेऽयज्वा स्यात् स चोदात्त इत्यर्थः । उभशब्दा-त्स्वार्थेऽयच् नित्यमिति 'नित्यमिति' योगस्यार्थः । अत्र च योगे महाविभाषाया असम्बन्धो नित्यमित्यनेन विरोधात् । इत्थञ्चोभकावित्यत्रायच्स्वार्थे नित्यं स्यादिति । नचैतस्यायचोऽत्यन्तस्वार्थिकत्वेन सुबुत्पत्तितः प्रागेवोत्पत्त्या द्विवचनोत्पत्तेः पूर्वं उभावित्यत्र द्विवचनपरत्वाभावस्य सत्त्वादयच् स्यादिति वाच्यम्, वार्त्तिकप्रामाण्या-द्यत्रोभशब्दस्योभयशब्दस्य वा द्विवचनविषयत्वाभावसम्भावना तत्रैवायचः प्रवृत्तेः ।

**भाष्यकृतस्तु**—स्वार्थिकाः प्रत्ययाः प्रकृतितोऽविशिष्टा भवन्तीति—प्रकृति-ग्रहणेन स्वार्थिकानामपि ग्रहणं भवती'ति-उभशब्दाद्विहितस्य कप्रत्ययस्य स्वार्थि-कत्वादुभशब्दार्थतया द्वित्वविशिष्टवाचकत्वेन प्रकृतिभूतोभशब्दग्रहणेन ग्राहकेण द्विवचनशब्देन ग्रहणं भवति । उभयोरुभावुभोभावित्याद्यनुरोधेन वार्त्तिके द्विवचन-शब्देन द्वित्वसंख्याप्रकारकसंख्येयविशेष्यकबोधविषयार्थानुवादकत्वरूपद्विवचनस्यापि ग्रहणम् । एवञ्चोभकावित्यादौ कप्रत्ययस्यापि द्विवचनत्वाद्द्विवचनपरत्वस्यैव सत्त्वे-नायचोऽप्रवृत्तौ कप्रत्ययेनैवेष्टसिद्धावुभशब्दस्य गणे पाठं प्रत्याचख्युरिति दिक् ।

**५३ प्र०—निर्जरसेत्यादौ विभक्त्यादेशं बाधित्वा परत्वाज्जरसिति प्राचीनमतम्, अत्र नव्यमतं साधुसप्रमाणं प्रतिपाद्य तयोर्मतयोर्युक्ता-युक्तत्वे भाष्याविरोधेन सम्यग् विविच्येताम् ।**

**उ०**—इनाद्यादेशात्पूर्वमेव परत्वाज्जरस्यदन्तत्वाभावादिनाद्यादेशाप्राप्त्या निर्जर-सेत्यादिरूपमिति प्राचीनाः ।

**नवीनास्तु**—पूर्वविप्रतिषेधेन पूर्वं विभक्त्यादेशे सन्निपातपरिभाषया क्वचिद-जादिपरत्वाभावेन च जरसादेशात्प्राप्त्या निर्जरेणेत्याद्येव रूपमित्याहुः । अत्र प्रमाणं 'जराया जरसि'ति सूत्रस्थं भाष्यमेव तथाहि—तत्र 'अजरसी'त्यत्र 'नपुंसकस्य

झलि'त्यनेन नुमो 'जराया जरसि'त्यनेन जरसश्च प्राप्तौविप्रतिषेधेन जरसित्युक्तम्। तत्र यदि श्यादेशात्प्रागेव जरसस्स्यात्तदा तदानीं सर्वनामस्थानपरत्वाभावेन नुमोऽप्राप्तौ तयोर्युगपत्प्राप्त्यभावेन 'पररूपरलब्धावकाशयोरेकदाप्राप्तौ परमि'त्यर्थकेन 'विप्रतिषेधे परमि'त्यस्याप्राप्त्या 'विप्रतिषेधेन जरसि'ति भाष्यमसङ्गतं स्यात्पूर्वं विभक्त्यादेशाङ्गीकारे तु पूर्वविप्रतिषेधेन पूर्वं विभक्त्यादेशे सर्वनामस्थानसंज्ञायां नुमूजरसोर्युगपत्प्राप्तौ विप्रतिषेधेन जरसिति सङ्गच्छते। ननु नैतद्भाष्यं नुमः पूर्वं जरसित्येतदभिप्रायकमपि तु 'अजरांसी'त्यत्र शिभावजरसोः प्राप्तौ कृतेऽपि जरसि प्राप्तेर्नित्यत्वाच्छिभावः कथन्नेति परेण शङ्किते 'एवन्तर्हि कृतेऽपि शिभावे प्राप्तेर्जरसपि नित्य इत्युभयोः साम्येन परत्वाज्जरसिति चान्येन समाहिते, शिभावे कृते नुमि, तेन व्यवधानान्निर्दिश्यमानत्वाभावाज्जरसादेशस्याप्राप्त्याऽनित्यो जरसादेश इति केनचिच्छङ्किते, 'जरसो नित्यत्वमुपपादयितुम्' न नुमः शिभावे कृते प्राप्तिस्तत्र नुम् जरसोः प्राप्तयोर्विप्रतिषेधेन जरसेवेति जरसादेशस्यापि नित्यत्वात्परत्वाज्जरसिति समीचीनमेवेति समाधानपरमिति चेन्न, 'टाङसी'ति सूत्रस्थकैयटोक्तेः प्रमाणत्वेनाभ्युपगमात्। तत्र हि—भाष्यकारः सन्निपातपरिभाषया जरसादेशमनभ्युपयन्नतिजरेण अतिजरादिति भाव्यं, नत्वतिजरसिनातिजरसादिति गौरवमुद्भावितवानित्युक्तम्। परत्वात्पूर्वं जरसादेशस्यैवाङ्गीकारे पूर्वं जरसादेशे इनाद्यप्राप्त्या वैकल्पिकत्वाज्जरसभावपक्षे जरसादेशाप्राप्त्या 'सन्निपातपरिभाषया जरसादेशमनभ्युपय'नित्यस्यासङ्गतिः स्पष्टैव। न चेदमपि न प्रमाणम्, तथाहि—अतिजर आ इति स्थिते वैकल्पिकत्वाद्विभक्त्यादेशात्पूर्वं जरसःइनादेशे अतिजर इनेति स्थिते अतिजर आ इति लक्ष्याद्वैलक्षण्यं गते निर्जरसा विति लक्ष्यान्तर इवात्रापि जरसादेशप्राप्तेर्निर्बाधेन सन्निपातपरिभाषया तदभावप्रतिपादनस्यौचित्यादिति वाच्यम्, जराया इति सूत्रस्थभाष्यस्यैवोक्तार्थे प्रमाणत्वात्। तत्र हि पूर्वपक्षिणा 'अतिजरसं पश्ये'त्यत्र लुक् कस्मान्नेति पृष्टे, परेण 'प्रथमैकवचने अतिजरसंतिष्ठतीत्यत्रापि कुतो लुक् न शङ्कयते'—इति पृष्टे, पूर्वपक्षिणा—'प्रथमैकवचनेऽम्भावोत्तरमेव जरस्' ( पूर्वमचूपरत्वाभावात् ) तत्र जरसि कृते सन्निपातपरिभाषया न लुक् इति द्वितीयैकवचनात् प्रथमैकवचने विशेष उक्तः। 'यद्वाऽम्भावे कृते सन्निपातपरिभाषया न जरसि'ति पाठभेदेन विशेष उक्तः। अत्र विशेषप्रतिपादकोऽन्त्यपाठ एव साधीयान्, न तु पूर्वपाठः। प्रथमैकवचने सन्निपातपरिभाषया लुको वारणेन तयैव द्वितीयैकवचनेऽपि तद्वारणसम्भवेन तत्र शङ्कोत्तरयोरसम्भवात्। अन्त्यपाठे च प्रथमैकवचने सन्निपात-

परिभाषया जरसोऽभावस्य सम्पादनेऽपि कार्यान्तरेऽपि तत्प्रवृत्तिरावश्यकीति नियमविरहादनित्यत्वेनापि तदप्रवृत्तेरुद्भावनाद् द्वितीयैकवचने लुक् कस्मान्नेति शङ्कोत्थानसम्भवात्। ततः परेण यद्येवम्—'अतिजरसम् अतिजरसैरित्यत्र न प्राप्नोति जरस्'—इति द्वितीयैकवचनादौ शङ्किते, सिद्धान्तिना—'इष्टमेवैतदतिजरमतिजरैरिति भवितव्य'मिति। एवमित्यस्य सन्निपातपरिभाषया जरस् न भवति चेदित्यर्थः।

सिद्धान्ती जरसोऽभावस्येष्टापत्तिकरणेनैव 'लुक् कस्मान्ने'ति शङ्कां समाधात् ज्ञानमित्यत्रेवात्रापि अमा लुको वारणमिति अत्रामोऽमादेशे कृत एवादन्तत्वमाश्रित्य जातस्यामादेशस्यादन्तत्वविघातकजरसादेशम्प्रत्यनिमित्तत्वं सन्निपातपरिभाषया बोधयितुं शक्यते नान्यथेति स्पष्टमेवानेन भाष्येण जरसादेशात् प्राक् पूर्वविप्रतिषेधेन विभक्त्यादेश इति लभ्यते।

**वस्तुतस्तु**—प्रथमैकवचने जरसोऽप्रवृत्तये सन्निपातपरिभाषाया आवश्यकत्वे तयैव लुकोऽपि वारणसम्भवेन लुक्शङ्काया निर्युक्तिकतया पूर्वपाठस्यैव विशेषोपपादने समीचीनत्वमवसेयम्। तथाहि—अम्भावोत्तरमेव जरसित्येतत्पर्यन्तमेव विशेषप्रतिपादकम्। तदप्राप्तियोग्ये चरितार्थ्याभावविशिष्टा या अपवादशास्त्रप्रवृत्त्यनन्तरोत्सर्गप्रवृत्तिसम्भावनाप्रयोज्यशास्त्रवैयर्थ्यसम्भावना, तादृशसम्भावनारूपबाधबीजवता-'तोऽमिति' सूत्रेण 'स्वमोर्नपुंसकादि'ति शास्त्रे स्वप्रवृत्तियोग्यातिरिक्तत्वेन, स्वविधेयघटकातिरिक्तत्वेन, च सङ्कोचादतिजरसं तिष्ठतीत्यत्र प्रथमैकवचने जरसादेशे कृतेऽम्घटितातिरिक्तस्वमोरभावेन लुकोऽप्राप्तिरिति द्वितीयैकवचन एव 'लुक् कस्मान्न भवती'ति शङ्कोचिता, न तु प्रथमैकवचने इति विशेषप्रदर्शनपरं भाष्यमुपपद्यते। 'तत्र कृते' इत्यादिना च द्वितीयैकवचने समाधीयते द्वितीयैकवचनममं निमित्तीकृत्यामादेशम्प्रबाध्य परत्वात्प्रवृत्तस्य जरसादेशस्याम् विघातकलुकं प्रत्यनिमित्तत्वान्न लुगिति तदभिप्रायः। ततः पूर्वपक्षिणा यदि सन्निपातपरिभाषाऽनुसन्धानं विधीयते तर्हि प्रथमैकवचने जरसपि न प्राप्नोति, अकारं निमित्तीकृत्य जातस्यामादेशस्याकारकविघातकजरसादेशं प्रत्यनिमित्तत्वादिति यद्येवमित्यादिनोक्ते सिद्धान्तिना 'इष्टमेवैतत्संगृहीत'मित्यादिना प्रथमैकवचने जरसादेशभावस्येष्टापत्तिरङ्गीकृता एवञ्चैतद्भाष्याद्विभक्त्यादेशस्य पूर्वविप्रतिषेधेन जरसादेशापेक्षया प्राबल्यं नोपलभ्यत इति प्राचीनोक्तमेव समीचीनमित्याकलनीयमिति दिक्।

**५४ प्र०—'पद्दन्नोमासि'त्यादिसूत्रविषये वृत्तिकारमतमुपपाद्य परेत्वित्यादिनोक्तं तत्खण्डनं शेखरोक्तिदिशा सम्पादनीयम्।**

उ०—'पदन्नोमासि'त्यादिसूत्रे 'स्वघटकव्यञ्जनघटितत्व–स्वबोध्यार्थविषयकबोधजनकत्वै–तदुभयसम्बन्धेन स्वविशिष्टरूपस्थानिनामाक्षेपात्पादादीनां स्थाने पदादय आदिश्यन्ते, न तु चरणादीनां स्थाने। 'आस्ये तुल्यः' पादेनोपहत'मित्यादिभाष्यप्रयोगानुरोधमनुसन्धाय 'अनुदात्तस्य चर्दुपधस्ये'त्यतोऽन्यतरस्यामित्यनुवृत्त्येमे आदेशा विकल्पेन विधीयन्ते।

ननु 'अनुदात्तस्ये'ति सूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वे तदनुवृत्त्यैव विकल्पे सिद्धे 'वा केशेषु' इत्यत्र वाग्रहणं व्यर्थमिति चेन्न, 'ये च तद्धिते' इति सूत्रे तदसम्बन्धसूचनाय तदावश्यकत्वादिति वृत्तिकृन्मतम्।

परे तु—'अनुदात्तस्ये'ति सूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वे तदनुवृत्त्यैव शिरश्शब्दस्थाने शीर्षन्नित्यादेशेऽपि तदुभयोः प्रयोगस्य निर्बाधेन 'शीर्षन्निति प्रकृत्यन्तरं द्रष्टव्यम्, आदेशत्वे हि छन्दसि शिरश्शब्दस्य प्रयोगो न स्यादि'ति 'शीर्षश्छन्दसी'ति सूत्रस्थभाष्यासङ्गत्या एवञ्च तस्य स्वरितत्वे स्थानिनिर्देशेऽपि शिरस्यपि च प्रत्ययस्य दुर्वारत्वेन तद्वारणाय (स्वानुरूपस्थानिन आक्षेपादेव लाभसम्भवे स्थानिनिर्देशाय च) 'ये च तद्धिते' इत्यत्र च 'आदेशत्वाय शिरसो ग्रहणं कर्त्तव्यमि'त्युक्तेः 'वा केशेषु' इति वक्तव्यमि'त्युक्तेश्च निरर्थकत्वेन च ('आदेशैः स्वानुरूपाः स्थानिन आक्षिप्यन्ते' इत्यस्य) 'अनुदात्तस्ये'ति सूत्रेऽन्यतरस्यामित्यस्य स्वरितत्वस्य (चा) युक्तत्वेन शसादिविषयाणि प्रकृत्यन्तराण्येव पदादय इत्यवसेयम्। एवञ्च स्थानिवद्भावेनावन्तत्वमादाय 'नसाम्' पृतामित्यादौ नुडादयोऽपि न भवन्तीत्याहुरिति दिक्।

**५५ प्र०—कोशस्थपदानां शब्दपरत्वार्थपरत्वयोः कतरस्मिन् शेखरकर्त्तुः पक्षपातः, कुतश्चेद्दृशो विचारः प्रवृत्त इत्यवधानपूर्वकमुपपादयत।**

उ०—'पद्दन्नोमासि'ति सूत्रे-प्रभृतिग्रहणस्य प्रकारार्थत्वे 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मन' इत्यमरकोशे सौ पच्छब्दस्य हृच्छब्दस्य, च प्रयोगः प्रमाणत्वेनोपन्यस्तः। शसादावेव पदादेः साधुत्वे पौ परे। तयोरसाधुत्वप्रसङ्गात्। प्रकारार्थत्वे तु प्रकारः सादृश्यमिति सुप्रवेन सादृश्ये तदुपपद्यत इति दीक्षितस्य नागेशस्य चाभिप्रायः, तन्न समीचीनम्। कोशपठितशब्दानां लोकप्रसिद्धशब्दानुकरणत्वेन शब्दपरत्वात् 'अभिधेयकपदार्था' ये इति न्यायसहकारेण सूत्रप्रवृत्तेरत्र

ग्रासम्भवादिति शङ्कां निराचिकीर्षुः शेखरकृद्व्याचष्टे—'**कोशे शब्दा अर्थपरा एवे**'ति ।

ननु तत्तदर्थनिरूपितशक्तिग्रहस्य कोशाधीनत्वादेतद्वाक्यार्थबोधात्पूर्वं शक्तिग्रहविरहेण सहकारिकारणोभावात् कोशपठितशब्दानामर्थपरत्वमसम्भवीति चेन्न, 'इमानि विष्ण्वादिपदानि–अर्थबोधकानि–पदत्वात्—मदुच्चरितघटादिपदवदि'त्यनुमानेन सामान्यतश्शक्तिग्रहसम्भवात् । एवञ्च विष्णुपदार्थाभिन्नो नारायणपदार्थ इत्येवं बोधः । नचैवमपि विष्णुत्वादिविशेषरूपावच्छिन्ननिरूपितशक्तिग्रहासम्भव एवेति वाच्यम्, नारायणपदं विष्णुत्वावच्छिन्नवाचकं विष्णुत्वावच्छिन्नवाचकविष्णुपदार्थाभिन्नार्थवाचकत्वात्, यत्पदं यदर्थवाचकपदार्थाभिन्नार्थवाचकन्तत्तदर्थवाचकं—मदुच्चरितकलशपदवदिति विशिष्यानुमानेन–इमानि विष्ण्वादिपदानि नारायणार्थवाचकानीति विशिष्यशक्तिग्रहसत्त्वात् । ननु पर्यायशब्दस्वरूपप्रतिपादनपरे श्रुतिविशेषे यथा पदानां स्वरूपपरत्वं तथा कोशेऽप्यावश्यकमिति चेन्न, 'अघ्न्ये देवि सरस्वति इडे काव्ये विहव्ये एतानि तेऽघ्न्ये नामानी'त्यादौ यत एतानि तव नामानि अतस्त्वदभिन्ना एषामर्था इति बोधाभ्युदयात् । अत एव 'नामन्त्रिते समानाधिकरणे' इति सूत्रभाष्ये 'सामान्यवचन'मित्यस्येदं प्रत्युदाहरणं दत्तम् । तथाबोधनाङ्गीकारेण भेदेन यथाश्रुतप्रतीयमानस्य हे अघ्न्ये तवैतानि–अघ्न्ये–इत्यादीनि शब्दरूपाणि नामानीत्यर्थस्याङ्गीकारे तु–एकार्थबोधकत्वरूपसमानाधिकरण्यस्याप्यभावात्तदसङ्गतिः स्यात् । नच कोशस्थशब्दानामर्थपरत्वे 'एकदन्त—हेडम्ब–लम्बोदर–गजननाः' इत्यादौ 'विरूपाणामपि समानार्थाना'मित्यनेनैकशेषापत्तिरिति वाच्यम्, तथा सति तत्तच्छब्दस्वरूपस्य सम्यग्बोधानापत्तेरिति दिक् ।

**५६ प्र०—'आतो धातो'रिति सूत्रे धातोरित्यस्य प्राचां मते–फलमुपपाद्य तत्र परेत्वित्यादिना ग्रन्थेन शेखरकृदुक्तः सिद्धान्तो विशदीक्रियताम् ।**

उ०—'आतो धातो'रिति सूत्रे धातोरित्यस्याभावे गन्धर्ववाचकाव्युत्पन्नहाहाशब्दाकारस्यादन्तत्वेन लोपापत्तिः ? तत्सत्त्वे तु धातुत्वाभावान्न भवति ।

ननु हा–इति शोकव्यञ्जकं शब्दं जहाति त्यजतीत्यर्थको हाधातुप्रकृतिकक्विबन्तो हाशब्दस्तथा च तत्र लोपाभाव इष्ट एवेति नेदं फलं युक्तमिति चेन्न, अकारेण सहितः सास्ततश्शसि सानित्यादौ तदभावे लोपप्रसङ्गादिति **प्राचीनाः** ।

परे तु—क्त्वः श्नः इत्यादौ लोपसिद्धये आवन्तमित्यस्य लोपाय इत्यर्थकम्

'आतोऽनाप' इति वार्त्तिककृताभिहितम्, भाष्यकृता च 'आत' इति योगविभागेन तत्र लोपमुपपाद्य वार्त्तिकं प्रत्याख्यातमित्यश्चाऽऽरम्भप्रत्याख्यानयोः फलैक्याय सानित्यत्रापि लोपस्येष्टत्वेन नेदमपि फलं समीचीनम्। एवञ्च सूत्रे धातोरित्यस्य धातुमात्रपरत्वे सूत्रकृन्मते सानित्यत्र लोपाप्राप्तिः, भाष्यवार्त्तिककृन्मते च लोपप्राप्तिरिति सूत्रकृदपेक्षया भाष्यवार्त्तिककृतोरज्ञानकल्पनं नौचित्यं परिचुम्बतीति त्रयाणां मते फलभेदाय धातुग्रहणमावन्तभिन्नपरमेवेत्त्यवसेयम्। नचैवमप्यावन्तादाचारक्विवादौ सूत्रवार्त्तिकयोर्मिथोर्विरोध एवेति वाच्यम्, आवन्तादाचारक्विपः, तत्क्विवन्ताद्वा कर्त्तृक्विपोऽनभिधानात्।

ननु वार्त्तिकेऽनाप्पदस्यावन्तभिन्नपरत्वं, सूत्रे धातुपदस्य स्वार्थपरत्वञ्चाङ्गीक्रियताम्, सानित्यत्र सर्वेषां मते लोपस्याङ्गीकार एवास्त्वित्येव कुतो न, फलभेदस्यास्मिन्नपि कल्पेऽभावादिति चेन्न, प्रथमयोरिति सूत्रस्थभाष्यविरोधात्।

तत्र हि 'अतो गुण' इति पररूपं बाध्यसामान्यचिन्तया 'अकः सवर्णे दीर्घः' 'प्रथमयोः पूर्वसवर्णः' इति दीर्घमात्रस्य बाधकमिति पक्षे—रामानित्यादिसिद्धये 'बहुवचने झल्येदि'ति सूत्रे बहुवचन इति योगं विभज्य तत्र 'अतो दीर्घ' इति 'सुपि चे'ति चानुवर्त्त्य बहुवचने सुप्यदन्ताङ्गस्य दीर्घं विधायाग्नीनामित्यादौ सावकाशं नुटं रामाणामित्यादौ परत्वाद्बाधित्वा दीर्घे कृते नुटोऽप्राप्तिमाशङ्क्य नुड्विधायके 'आम्नसेरसुगित्यत आद्ग्रहणमनुवर्त्त्यादन्तादपि नुटो विधानेन समाधाय कीलालपामित्यादावालोपं परत्वाद्बाधित्वाऽऽदन्तत्वप्रयुक्तो नुट् स्यादित्याशङ्क्य 'आतो धातो'रिति नुड्विधायकेऽनुवर्त्त्य वाक्यभेदेन नुटो बाधकमतो लोपं विधाय समाहितम्। भवदुक्तरीत्याऽधात्ववयवाकारान्तानां लोपाभावे तु प्रागुक्तसाशब्दादामि लोपाभावेनादन्तान्नुटि सानां सिद्धान्तभूते यथास्थितपक्षे ह्रस्वनद्यापः परत्वाभावेन नुटोऽप्राप्त्या दीर्घे सामिति फलभेदेन तद्भाष्यासङ्गतिः स्पष्टैव। तस्मात्सूत्रे धातुपदमावन्तभिन्नपरमेवेत्याहुरिति दिक्।

**५७ प्र०—'अचचघे'रित्यत्रोच्चारणार्थकस्य तकारस्येत्त्वलोपयोरावश्यकतया 'अग्नौ' इत्यादौ कथन्न स्वरितान्तत्वापत्तिरिति साधु समाधत्त।**

उ०—ननु अदौतोस्तकारयोर्मुखसुखार्थत्वेऽपि इत्संज्ञाया आवश्यकत्वे इत्संज्ञानन्तरं लोपे कृतेऽतस्तकारे दोषाभावेऽपि औतो विभक्तित्वात् 'न विभक्तौ तुस्माः' इति निषेधात् कथमित्संज्ञेति चेन्न, मुखसुखार्थमित्यस्य तदेव प्रयोजनं न तु कार्यान्तरं

नापि प्रयोगे श्रवणमित्यर्थात् परार्थत्वाभावेन तादृशमुखसुखार्थत्वप्रतिज्ञयैव 'न विभक्तौ' इत्यस्य तत्र प्रवृत्तिविरहात्। यदि तूच्चारणार्थानां शास्त्रप्रवृत्तिमन्तरैव निवृत्तिः स्यात्तदा इत्संज्ञकानामपि तद्वदेव निवृत्तिसंभवात् तदर्थं 'तस्य लोपः' इत्यस्यापि नास्त्यावश्यकता स्वभाववादस्य ( परार्थत्ववादस्य ) उभयत्रापि तुल्यत्वात्। नन्वेवम् 'अग्नौ' इत्यत्रौतः स्वरितत्वापत्तिः। न च प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणम्' इति परिभाषयैव सिद्धे 'तितिप्रत्ययग्रहणं कर्त्तव्यम्' इति वार्तिकादौपदेशिकप्रत्ययत्ववत्येव 'तित्स्वरितम्' इत्यस्य प्रवृत्तिरिति वाच्यम्? प्रत्ययाप्रत्यययोरिति परिभाषाया लक्ष्यसिद्धये भाष्यकृता क्वचिदपि आश्रयणाभावादिति चेन्न, उक्तवार्तिके प्रत्ययग्रहणमित्यस्य विधानकालिकप्रत्ययत्ववद्ग्रहणमित्यर्थकया औदादेशे आतिदेशिकस्यैव प्रत्ययत्वस्य सत्वेन विधानकालिकप्रत्ययत्वाभावेन दोषाभावात्। प्रत्ययपदस्य विधानकालिकप्रत्ययत्ववति लाक्षणिकत्वादेव औदादेशे दित्त्वमाश्रित्य तकारप्रत्याख्यानेन फलभेदोऽपि न भवति। अन्यथा तु फलभेदापत्त्या प्रत्याख्यानस्यैव संभवापत्तिरिति शम्।

**५८ प्र०—'असखी'ति पर्युदासे तदन्तविधिना सुसखिशब्देऽपि पर्युदासप्राप्तौ तत्र तत्र पर्युदासाभावं प्राचीनमतेन साधु निगद्यात्र विषये शेखरकारमतमुपपाद्य प्राङ्नव्यमतयोर्युक्तायुक्तत्वे तदुभयपक्षोपपादनपुरस्सरं विवेचनीये।**

उ०—वर्णसंज्ञापक्षे 'असखी'त्यस्य सखिभिन्नावयवाविवर्णोवर्णौ घिसंज्ञावित्यर्थः। पर्युदासन्यायेन सखिभिन्नं यत्प्रातिपदिकं तदवयवेकारोकारयोर्घिसंज्ञा भवतीत्यर्थेन कृतं सख्येति वाक्ये कृतं सखीतिसमुदायस्य सखिभिन्नत्वेन तदवयवेकारस्य न घिसंज्ञापत्तिर्दोषः। वाक्यस्याप्रातिपदिकत्वाद्। वर्णसंज्ञापक्षे—आकडारीयत्वाल्लघुघिसंज्ञयोरसमावेश इति सिद्धान्तभूते तदन्तसंज्ञापक्षे तु—सखिभिन्नाविवर्णोवर्णान्तौ घिसंज्ञावित्यर्थः। एवञ्चोभयपक्षेऽपि सुसखीति समुदायस्य सखिशब्दभिन्नत्वेन घित्वं युक्तमेव।

न च 'असखी'त्येतद्घटकसखिशब्दे तदन्तविधिना पर्युदासो दुर्वार इति वाच्यम्' विशेष्यासत्त्वेन तदन्तविधेरभावादिति **प्राचीनाः।**

'यस्येति चे'ति सूत्रभाष्यमनुरुन्धानाः **शेखरकृतस्तु**—'अत्वसन्तस्य चाधातो'रित्यत्रेव सखिशब्दस्य तदवयवे लक्षणया सख्यवयवभिन्नयोरिदुतोरित्यर्थः। अवयवोद्देश्यककार्ये समुदायो यत्र पर्युदस्यते तत्र समुदायघटकपदानां

स्वावयवपरत्वमिति नियमात् । तदन्तसंज्ञापक्षेऽपि शेषपदार्थं विशेष्यीकृत्य तदन्तविधिना सख्यवयवभिन्नेकाराकारान्तयोरित्येवार्थः । एवञ्च सुसखिशब्दावयवेकारस्य सख्यवयवभिन्नत्वाभावान्न सुसखिशब्दस्य घिसंज्ञा ।

न च तदन्तविधिनेदन्त इत्यर्थे इकारस्य पदार्थैकदेशत्वात्तत्र सख्यवयवभेदस्यान्वयो भवितुं नार्हतीति वाच्यम्, 'उतश्च प्रत्ययादि'त्यादि सूत्रे तदन्तविधिनोदन्त इत्यर्थे—उकारस्य पदार्थैकदेशत्वेऽपि तत्रासंयोगपूर्वत्वस्येव पदार्थैकदेशेऽप्यन्वयाङ्गीकारादित्याहुः । तत्र हि भाष्ये—इवर्णस्य इति किमुदाहरणम् ? अतिसखेरागच्छति । सखिशब्दात् 'सख्यशिश्वीति भाषाया'मित्यनेन ङीषि अतिना समासे, उपसर्जनह्रस्वत्वेऽतिसखिस्तत्र ङीष ईकारे परे सख्यवयवेकारस्य लोपाभावे कृतदीर्घस्य पूर्वान्तवद्भावेन सखिशब्दत्वात्—अतिदेशविषये प्रतिपदोक्तपरिभाषाया अप्रवृत्त्योपसर्जनह्रस्वत्वे कृतेऽपि घिसंज्ञा न स्यात् । लोपे तु पूर्वान्तवद्भावाभावात् लाक्षणिकत्वात् कृतह्रस्वेकारान्तसखिशब्दस्य सखिशब्देनाग्रहणात् पर्युदासाप्रवृत्तौ घिसंज्ञा सिद्ध्यतीत्युक्तम् । **प्राचां मते**—लोपस्यासत्त्वेऽप्यतिसखीति समुदायस्य सखिभिन्नत्वेन घित्वप्रवृत्तेर्भाष्यासङ्गतिर्दुर्वारैव ।

**नवीनमते तु**—लोपे सत्युक्तरीत्येकारस्य सख्यवयवभिन्नत्वात्तदन्तस्य घिसंज्ञा—लोपाभावे सतीकारस्य सख्यवयवत्वेन पर्युदासप्रवृत्तौ तदन्तस्य घित्वाभावश्चेति भाष्याविरोधः सुस्पष्ट एवेति ।

न च नवीनमतेऽपि 'ख्यत्यादि'ति सूत्रभाष्यासङ्गतिः । तत्र हि—'किमर्थं विकृतनिर्देशः, न—'सखिपतिभ्या'मित्येवोच्यते ?, अतिसखेरित्यत्र माभूत्' इत्युक्तम् । तथा हि सखायमतिक्रान्त इत्यर्थे—इकारस्य सख्यवयवत्वात् घिसंज्ञानापत्तिः । सखीमतिक्रान्त इत्यर्थे 'विभक्तौ लिङ्गविशिष्टाग्रहणमि'ति निषेधात् 'प्रातिपदिकग्रहण' इत्यस्याप्रवृत्त्या श्रूयमाणस्य सखिशब्दस्य लाक्षणिकत्वेन च सखिशब्दात्परत्वाभावेन दोषाभावादिति वाच्यम् । लक्षणप्रतिपदोक्तपरिभाषाया अनाश्रयणेनैतद्भाष्यस्य सत्त्वात् ।

न चैवं **नव्यमते** भाष्यस्य न्यूनत्वमापतति । **प्राचीनमते तु**—अङ्यन्तस्य सखिशब्दस्य प्रतिपदोक्तत्वान्न न्यूनत्वशङ्केति वाच्यम्, तन्मतेऽपि अतिसखिशब्दात् ङसो विहितत्वेन सखिशब्दात् विहितत्वाभावेन विहितविशेषणानाश्रयणेनैतद्भाष्यप्रवृत्तिरित्यस्य वक्तव्यत्वेनोभयमत एव न्यूनतायाः साम्यादिति दिक् ।

**५९ प्र०—'शेषो घ्यसखि' इत्यत्र 'असखि' इत्यस्य सख्यवयवभिन्ना[illegible] समासमुदायस्य [illegible] न वेति विवेचनीयम् ।**

उ०—सख्यवयवभिन्नाविदुतावित्यर्थे प्रमाणन्तु पूर्वतो द्रष्टव्यम् ।

वस्तुतस्तु—सखिभिन्नावयवावित्येवार्थः समीचीनः, प्रकृतसूत्रार्थप्रतिपादनप्रवृत्तभाष्यस्य यस्येति सूत्रस्थैकदेशयुक्तभाष्यवलेनान्यथायोजनस्यायुक्तत्वात् । बहुव्रीहौ कवापत्त्या–तत्पुरुषे च टजापत्त्याऽतिसखेरिति रूपस्यैवासम्भवेन, लोपेऽपि लिङ्गविशिष्टपरिभाषया तत्र घिसंज्ञाप्राप्तेश्च तस्य भाष्यस्यैकदेशयुक्तित्वं स्पष्टमेव । संज्ञाशास्त्रस्य विधिनिमित्तनिमित्तकत्वेन विभक्तिनिमित्तकत्वमाश्रित्य प्रवृत्त्यसम्भवात् 'विभक्तौ लिङ्गविशिष्टाग्रहण'मित्यपि नात्र प्रवर्त्तते । बहुच्प्रत्ययघटितवहुपत्युरित्यादीष्टरूपासिद्धया विहितविशेषणानाश्रयणस्यावश्यकत्वात् । 'सखिपतिभ्या'मित्यस्य 'खितिभ्या'मिति लघुन्यासोपलक्षणत्वेन च विहितविशेषणताया वक्तुमशक्यत्वाच्च शेखरोक्तमसङ्गतमेवेत्यवसेयमिति दिक् ।

**६० प्र०—प्रत्ययलोपसूत्रस्य विध्यर्थत्वमुपपाद्य भाष्यरीत्या तस्य नियमार्थत्वमपि प्रतिपादनीयम् ।**

उ०—'अतृणेट्' 'मित्रशीः, इत्यादावल्विधित्वेन स्थानिवद्भावाप्राप्तावपि तत्र प्रत्ययलक्षणार्थं प्रत्ययलक्षणसूत्रमिति वार्त्तिककृतः । नचैतन्मते प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वे गवे हितं गोहितमित्यत्र प्रत्ययलक्षणेनावायादेशापत्तिरिति वाच्यम्, 'प्रत्ययलोपे तल्लक्षण'मित्येव सिद्धे प्रत्ययग्रहणेन–प्रत्ययमात्रवृत्तिविषयताप्रयोजकं यत्पदन्तत्प्रतिपाद्यतावच्छेदकरूपप्रत्ययासाधारणधर्मस्य विवक्षितत्वेन 'एचोऽयवायाव' इत्यत्राच्त्वस्य तथात्वाभावेनादोषात् । न चैवमपि चित्रायां जाता चित्रेत्यत्राण्त्वस्य प्रत्ययासाधारणरूपत्वात् 'टिड्ढेति ङीवापत्तिरिति वाच्यम्, प्रधानाप्रधानन्यायेन यत्र प्रत्ययासाधारणधर्मावच्छिन्नस्य प्राधान्येनाश्रयणन्तत्रैव प्रत्ययलक्षणसूत्रप्रवृत्तेः । प्राधान्यञ्चावयवावयविभावादिसम्बन्धावच्छिन्नप्रकारतानाश्रयत्वमिति–'अणो योऽकार' इत्यर्थेऽणि प्रकारताश्रयत्वस्यैव सत्त्वात् ।

भाष्यकृतस्तु–स्थानिवत्सूत्रेणैव सिद्धे प्रत्ययलक्षणसूत्रं नियमार्थं, न त्वल्विधौ विध्यर्थम्, अनल्विधावित्यस्यात्राप्यनुवृत्त्या स्थानिवत्सूत्रवदस्याप्यल्विधावनिष्टत्वात् । न 'चातृणेट्' 'मित्रशीरि'त्यादावल्विधित्वेन स्थानिवद्भावाप्राप्त्या कथं रूपसिद्धिरिति वाच्यम्, 'तृणह इम्' इति हल्ग्रहणमननुवर्त्त्य 'नाभ्यस्तस्याची' त्यतो नेति–अचीति चानुवर्त्त्याजादौ नेति व्याख्यानेन परिशेषादेव हलादौ पिति तत्प्रवृत्त्याऽल्विधित्वाभावादेवेमागमस्य, एवं मित्रशीरित्यत्रापि 'शास इत्' इत्येको योगः, 'अङी'त्यपरः । तत्र पूर्वेण सिद्धे अजादौ क्ङिति चेदङ्येवेति नियमार्थत्वेनाङीत्यस्य

व्याख्येयतया 'शास इदि'त्यत्र 'हली'त्यस्यांकरणादल्विधित्वाभावेन क्त्विस्य प्रत्ययलक्षणं विनापि स्थानिवत्त्वेनैव नियमेनेत्त्वस्य च सिद्धेः।

नचैवं 'दाधर्त्ती'ति सूत्रे किं निपात्यते ? आत्मनेपदम् ! नैतदस्ति—'अनुदात्तङित' इत्येव सिद्धम्, नियमार्थं तर्हि भविष्यति—'अत्रैव यङ्लुगन्तस्य, नान्यत्रेभिदीति' इत्युक्तम्। 'प्रत्ययलोप' सूत्रस्य नियमत्वे ङित्त्वस्य प्रत्ययासाधारणरूपत्वाभावात् 'अनुदात्तङित' इत्यनेनात्मनेपदस्य दुर्लभत्वान्नियमार्थत्वोक्तिर्भाष्यकृतो विरुद्धयेतेति वाच्यम्, 'आत्मनेपदमित्यस्यैव सिद्धान्त्युक्तत्वेन नियमार्थत्वप्रतिपादनपरकभाष्यस्यैकदेश्युक्तित्वेनादोषात्। तथा हि—ततो 'विध्यर्थ'मिति वार्त्तिकानुसारिणा 'अनुदात्तङित' इत्येव सिद्धमिति शङ्किते तदनुसार्येकदेशिन एव तत्समाधानादित्याहुरिति दिक्।

**६१ प्र०—प्रत्ययलोपसूत्रसिद्धनिर्दुष्टनियमाकारमुपपाद्य तत्र सङ्कोचप्रकारोऽपि दर्शनीयः।**

**उ०**—ननु यदि—'कृत्स्नप्रत्ययलोपे सति लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्मावच्छिन्न-निमित्तताकमेव कार्यं भवति, नातिरिक्तमिति नियमाकारस्तर्हि—'दध्यत्रे'त्यादौ कृत्स्नप्रत्ययलोपसत्त्वाद्यणादिकं न स्यात्, नियमाक्रान्तत्वात्। 'कृत्स्नप्रत्ययलोप एव लुप्तप्रत्ययवृत्तिप्रत्ययासाधारणधर्मावच्छिन्ननिमित्तताकं कार्यं नान्यत्रेति रीत्या तत्स्वीकारे तु 'दधी'त्यत्र लुप्तसुप्रत्ययवृत्तिसुप्त्वावच्छिन्ननिमित्तकपदत्वादिकार्यस्य तदतिरिक्ते 'राम' इत्यादावप्यप्रवृत्त्यापत्तेः। 'कृत्स्नप्रत्ययलोप एव न तद्भिन्ने—अवयवलोपे'—इत्यपि न, 'राम' इत्यादौ पदत्वसिद्धावपि—'सुदृषत्प्रासाद' इत्यादौ स्थानिवद्भावस्यावारणाद्दीर्घापत्तेरनुद्धारादिति चेन्न ? 'कृत्स्नप्रत्ययलोपे लुप्तप्रत्ययवृत्तिप्रत्ययसाधारणधर्मावच्छिन्ननिमित्तताकमेव कार्यं नान्यदित्येवम्विधस्यैव नियमाकारस्याङ्गीकारात्। न च 'राजात्र' 'दध्यत्रे'त्यादौ दीर्घयणादेरप्यनापत्तिरिति वाच्यम्, नियमस्य सजातीयविषयतया तादृशप्रत्ययासाधारणधर्मावच्छिन्ननिमित्तताककार्यस्यैव वारणादिति।

ननु नियमस्थले व्यर्थशास्त्रीयोद्देश्यतावच्छेदकव्यापकं यद्व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं तद्धर्मावच्छिन्नातिरिक्तत्वेन व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचो भवति, यथा समासग्रहणकृतनियमेन समासत्वव्यापकमर्थवत्त्वव्याप्यं यत्पूर्वभागपदघटितसमुदायत्वं तदवच्छिन्नातिरिक्तत्वेनार्थवत्त्वावच्छिन्ने सङ्कोचस्तथा प्रकृते व्यर्थशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने आदेशे

व्यर्थताप्रयोजकशास्त्रीयोद्देश्यतावच्छेदक-प्रत्ययलोपत्वव्यापकस्य कस्यापि रूपस्याप्रसिद्धेस्तादृशरूपावच्छिन्नातिरिक्तत्वेन सङ्कोचो नोपपद्यते। न च स्वस्यैव स्वव्यापकत्वात्प्रत्ययलोपत्वमेव तादृशं रूपमिति तदवच्छिन्नातिरिक्तत्वेन स्थानिवत्सूत्रीयोद्देश्यतावच्छेदकादेशत्वावच्छिन्ने सङ्कोच इति वाच्यम्, स्नुषाश्वश्रून्यायप्रसङ्गात्प्रकृते स्वविशिष्टत्वं स्वव्यापकत्वम्, वै० स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्व-स्वाभाववद्वृत्तित्वोभयसम्बन्धेनेत्यस्यैव स्वीकारेण स्वव्यापकत्वस्य स्वस्मिन् वक्तुमशक्यत्वादिति चेन्न, व्यर्थशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने आदेशे व्यर्थताप्रयोजकप्रत्ययलक्षणशास्त्रीयोद्देश्यतावच्छेदक-'प्रत्ययत्वव्याप्यधर्मावच्छिन्ननिमित्तकार्यप्रयोजकीभूतप्रत्ययलोपत्वव्यापक-व्यर्थशास्त्रीयोद्देश्यतावच्छेदक-'आदेशत्व'-व्याप्य-'लुप्यमानप्रत्ययवृत्तिधर्मसमानाधिकरणधर्मावच्छिन्नत्व'-रूपधर्मावच्छिन्नातिरिक्तत्वेन सङ्कोचस्योपपादयितुं शक्यत्वादिति दिक्।

**६२ प्र०—'यू स्त्र्याख्यौ' विति सूत्रे नित्यस्त्रीवाचकावित्यर्थलाभः कथमिति साधु निगद्य नित्यस्त्रीत्वं निर्दुष्टं सपदकृत्यं परिष्क्रियताम्।**

उ०—स्त्रियमेवाचक्षाते स्त्र्याख्यौ ख्याधातोर्मूलविभुजादित्वात्कप्रत्ययः, स्त्रियामित्युक्त्यैव स्त्रीवाचकावित्यर्थलाभसम्भवेनाख्याग्रहणसामर्थ्यादेवकारार्थान्तर्भाविणवृत्तिबोधनद्वारा नित्यस्त्रीलिङ्गावित्यर्थलाभः। एवञ्च नित्यस्त्रीवाचकावित्यर्थ उपपद्यते।

**नित्यस्त्रीत्वञ्च**—प्रवृत्तिनिमित्तविशिष्टशक्तिविशिष्टत्वम्। प्रवृत्तिनिमित्तवैशिष्ट्यञ्च—स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्व-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्व-स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वैतत्रितयसम्बन्धेन। शक्तिवैशिष्ट्यञ्च-'स्वपर्याप्त्यधिकरणत्व-स्वज्ञानाधीनोपस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यीयविषयतापर्याप्त्यधिकरणत्वैतदुभयसम्बन्धेन। तात्पर्यविशेष्यतावैशिष्ट्यञ्च—स्वावच्छेदकतद्व्यक्तित्वव्यापकानुपूर्वीव्याप्यधर्मावच्छिन्नत्व-स्वसामानाधिकरण्योभयसम्बन्धेन। प्रवृत्तिनिमित्तवैशिष्ट्यघटकप्रथमसम्बन्धोपादानेन 'सेनानीः शब्दस्य न नित्यस्त्रीत्वम्', अन्यथा सेनात्वरुपप्रवृत्तिनिमित्तमादाय—स्वावच्छिन्ननिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्नविशेष्यतानिरूपितसत्त्वेन दोषस्य दुरुद्धरत्वं स्यात्।

**प्रथमसम्बन्धोपादाने तु**—सेनात्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य तादृशशक्त्यावभावान्न दोषः।

**द्वितीयसम्बन्धोपादानेन**—जिह्रेतीति ह्रीरित्यादौ धातुवाच्यतावच्छेदक-साध्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा साध्यत्वस्य कस्यापि लिङ्गस्या-न्वयितानवच्छेदकतया 'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य स्वावच्छिन्नविशेष्य-तानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोजकत्वस्य च साध्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुरुद्धरः स्यात्।

**तृतीयसम्बन्धोपादानेन**—स्त्रीलिङ्गविषयकतात्पर्येणोच्चरित—सेनानीशब्दे एव सेनाकर्मकनयनकर्तृत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा सेनाकर्मक-नयनकर्तृत्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यतानिरूपित-स्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य च सेनाकर्मकनयनकर्तृत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन दोषो दुर्वारः स्यात्।

शक्तिवैशिष्ट्यघटकप्रथमसम्बन्धानुपादाने सेनानीशब्द एव सेनात्वरूपप्रवृत्ति-निमित्तमादाय—'स्वावच्छिन्नमुख्यविशेष्यताप्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यता-निरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्ग-निष्ठप्रकारत्वाप्रयोजकत्वस्य च सेनात्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तज्ज्ञानाधीनो-पस्थितिप्रयोज्यशाब्दबोधजनकत्वप्रकारकतात्पर्यविशेष्यताविशिष्टतात्पर्यीयविषयताप-र्याप्त्यधिकरणत्वस्य सेनानीशब्दे सत्त्वाद्दोषो दुर्वारः स्यात्।

शक्तिवैशिष्ट्ये द्वितीयसम्बन्धोपादानेन—वात्स्या-आयः—वात्स्यायः, वात्स्या-यं नयतीति—'वात्स्यायनी'त्यादौ वात्सीसम्बन्ध्यायकर्मकनयनकर्तृत्वावच्छिन्नविषय-कबोधतात्पर्येणोच्चारिते वात्सीसम्बन्धियुवापत्यत्वरूपप्रवृत्तिनिमित्तमादाय न दोषः। अन्यथा स्त्रीत्वविशिष्टवत्सयुवापत्यत्वरूपप्रवृत्तिनिमित्तस्य—'स्वावच्छिन्नमुख्यविशेष्यता-प्रयोजकत्वस्य, स्वावच्छिन्नविशेष्यतानिरूपितस्त्रीत्वनिष्ठप्रकारताप्रयोजकत्वस्य, स्वाव-च्छिन्नविशेष्यतानिरूपितस्त्रीत्वेतरलिङ्गनिष्ठप्रकारत्वाप्रयोकत्वस्य च स्त्रीत्वविशिष्टवत्स-युवापत्यत्वावच्छिन्ननिरूपितशक्तौ सत्त्वेन तादृशशक्तिपर्याप्त्यधिकरणत्वस्य निरुक्त-वात्स्यायनीशब्दे सत्त्वाद्दोषो दुर्वारः स्यात्।

बोधजनकप्रकारकतात्पर्यविशेष्यतावैशिष्ट्यादानेन बोधविषयत्वादिप्रकारकतात्पर्ये-णोच्चरितस्थले न दोष इति पर्यालोच्यम्।

# अथ अजन्तस्त्रीलिङ्गप्रकरणम् ॥ ८ ॥

**६३ प्र०—'अतिखट्वाये'त्यत्र याट्प्राप्तितन्निरासयोरवसरं ग्रन्थोक्तदिशा प्रतिपाद्य तत्र परे त्वित्यादिनोक्तः शेखरग्रन्थो विशदं वर्णनीयः।**

उ०—ननु 'याडापः' इत्यत्र 'आ–आवि'ति प्रश्लेषे सत्यपि अतिखट्वायेत्यत्र दीर्घे सत्याकाररूपत्वस्य स्वत एव सिद्धतया—आप्त्वस्याल्वव्याप्यधर्मत्वाभावेन स्थानिवत्त्वलभ्यतया याड्दुर्वारः। न च 'ङ्याप्स्थानिको दीर्घभिन्न आदेशो न स्थानिवदि'त्येतदर्थकेन 'ङ्याब्ग्रहणेऽदीर्घ आदेशो न स्थानिवदि'त्यनेन ह्रस्वे आप्त्वस्य विच्छेदात्स्थानिवत्त्वेन तल्लाभो भवितुं नार्हतीति वाच्यम्, 'याडापः' 'औङ आपः' 'आङि चाप' इत्यादिष्वाकारप्रश्लेषमाश्रित्य—स्थानिवत्त्वनिषेधप्रत्याख्यातभाष्यनये—शङ्कासत्त्वेनादोषात्।

न चैवमपि—अतिखट्वस्य—अः—'अतिखट्वाः' इत्यादौ वार्त्तिकमतेन सुलोपः सूत्रभाष्यमते तत्प्रश्लेषेऽपि स्यादिति फलभेदात्प्रत्याख्यानं न युक्तिसहमिति वाच्यम्, तादृशप्रयोगाणामनभिधानादिति चेन्न, 'याडापः' इत्यत्र प्रत्ययग्रहणपरिभाषोपस्थित्या–आवन्ततदाद्यभिन्नादङ्गात्परस्येत्यर्थेन तद्वारणात्। अङ्गस्य तद्विशेषणतयैव वर्त्तमानत्वेन—न पुनस्तत्र तदन्तविधिना दोष उद्भावनीयः। न च स्त्रीप्रत्यये वाचनिकतदादिविधिनिषेधो भाष्ये पठितः, एवञ्च प्रकृते तदादिविधिर्न स्यादिति वाच्यम्, अनुपसर्जनस्त्रीप्रत्यय एव तन्निषेधादिति व्याख्यादर्शाद्यनुरोधेन।

**परे तु**—'ओ'दित्यादौ वर्णग्रहणेऽपि लक्षणप्रतिपदोक्तपरिभाषायाः प्रवृत्तेर्भाष्येऽप्युक्तत्वादतिखट्वायेत्यत्रापि दीर्घनिष्पन्नाकारस्य लाक्षणिकत्वात्तत्रैव याड्वारणं युक्तम्।

न चैवं 'निशायै' इत्यादौ चरितार्थस्य 'याडापः' इति सूत्रस्य 'खट्वायै' इत्यत्र तया प्रवृत्तिर्न स्यादिति वाच्यम्, यस्य रूपस्य लक्षणप्रवृत्तिं विना न सम्भवस्तस्यैव लाक्षणिकत्वेनाभ्युपगमात्। ननु 'ओदि'ति सूत्रभाष्यमेकदेश्युक्तिः, गोऽभवदित्यादावावश्यकेन गौणमुख्यन्यायेनैव' अदोऽभवदित्यादिवारणसम्भवात्, एवञ्च वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्त्तत इति चेदत्रोच्यते—

'पदाङ्गाधिकारे' इति वार्त्तिकेनाङ्गस्य विशेष्यताया एवौचित्यम्। अत एव 'आवन्तान्तं यदङ्गमित्यर्थाभिप्रायेण—'अतिखट्वाये'त्येतत्सिद्धये—'अतिखट्व–ए' इति स्थिते प्रवृत्तं 'ङ्याब्ग्रहणेऽदीर्घ' इति वार्त्तिकं व्याख्याय—श्रुताकारस्मृतानुबन्धाभ्यामाप्त्वेनाशङ्कां कृत्वा, लाक्षणिकत्वेन समाधाय—आकारप्रश्लेषेण वार्त्तिक-

प्रत्याख्यानावसरेऽतिखट्वायेत्यत्र याटः परिहारायोपायान्तरं नोपपादितं भाष्ये अतिखट्वायेत्यत्र याट्प्रवृत्तिशङ्का च नाकारप्रश्लेषमात्रेणापनेतुं शक्यते दीर्घनिष्पन्नाकारस्य दीर्घत्वानपायात्, अतो लक्षणप्रतिपदोक्तपरिभाषासञ्चारो [ वार्त्तिकसत्त्व इव तत्खण्डनेऽपि ] भाष्यकृदभिमत इत्यभ्युपेयम्। एवञ्च—आवन्तान्तं यदङ्गमित्येवार्थः, वर्णग्रहणे लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिश्च भाष्यारूढेति नागेशाशयोऽवगन्तव्य इति।

किञ्चाङ्गस्य विशेषणत्वे वार्त्तिकस्य, तत्प्रत्याख्यानाय आकारप्रश्लेषस्य च वैयर्थ्यं स्पष्टमेव।

न च धर्मिसन्निधाने प्रत्ययग्रहणपरिभाषाया धर्ममात्रोपस्थापकतयाऽङ्गसन्निधाने तदादित्वमात्रस्यैवोपस्थित्याऽऽबन्ततदाद्यभिन्नमङ्गमित्यर्थस्यैव लाभेन नातिखट्वायेत्यत्र याटः प्राप्तिरपि' एवञ्च—अङ्गस्य विशेष्यताया एवौचित्या'दिति नागेशभट्टोक्तं नास्माकं प्रतिकूलम्, अस्माभिरङ्गस्य विशेषणताया अनुक्तेः। किन्तु तदादित्वधर्ममात्रोपस्थित्या न द्वितीयस्तदन्तविधिरित्यस्यैवास्माभिराश्रयणात्। वार्त्तिकखण्डनावसरे भाष्ये उपायान्तराकथनञ्चोक्तरीत्या धर्ममात्रोपस्थित्या द्वितीयतदन्तविधेरभावेनातिखट्वायेत्यस्यावन्ततदादित्वाभावादेव याटः प्राप्तेरेवाभावादेव। ङ्याप्ग्रहणवार्त्तिकव्याख्यावसरे भाष्ये लक्षणप्रतिपदोक्तपरिभाषया वारणन्तूपायस्योपायान्तरादूषकतयैव। अङ्गस्य विशेषणतायाः प्राचीनानुसारिभिरनुक्तेरेव 'किञ्चाङ्गस्ये'त्यादि भट्टोक्तमपि न प्रतिकूलमिति वाच्यम्, एवमप्युपसर्जनस्त्रीप्रत्यये तदादिनियमेन—खट्वाया अर्द्धेऽर्द्धखट्वायामित्यादेरावन्ततदाद्याभिन्नाङ्गत्वाभावाद् याडनापत्तेः। (एवञ्च तदन्तविधिद्वयमिहावश्यकमिति तात्पर्यम्)

न च 'स्त्रीप्रत्यये चानुपसर्जने ने'त्यत्र शास्त्रीयस्यैवोपसर्जनस्य ग्रहणेन 'एकविभक्तिचापूर्वनिपाते' इति शास्त्रीयोपसर्जनत्वस्य–'एकविभक्तावषष्ठ्यन्तवचन'मित्यनेन निषेधात् 'खट्वाया अर्द्धमित्यखट्वेत्यस्य शास्त्रीयोपसर्जनत्वाभावेनोपसर्जनस्त्रीप्रत्ययातिरिक्ते तदादिनियमाभावादर्द्धखट्वायामित्यत्र तदन्तविधिद्वयाभावेऽपि न याडनापत्तिरिति वाच्यम्, आकारप्रश्लेषपक्षेऽपि दीर्घोत्तरं—'स्वाश्रयाकारत्वं स्थानिवद्भावेनाप्त'मिति शङ्काया अयुक्तत्वात्, दीर्घात्पूर्वं स्थानिवत्त्वस्य फलाभावादप्रवृत्तौ स्थानिन्याप्त्वबुद्धेरभावात्तदादेशे दीर्घे तदारोपस्य दुर्लभत्वात्, परम्परया कार्यमादाय स्थानिवत्त्वप्रवृत्तौ फलाभावात्। प्रकृते प्रमाणन्तु 'याडाप' इति सूत्रस्थं भाष्यमेव।

तत्र हि—'अतिखट्वाये'त्यत्र स्थानिवत्त्वात्प्राप्तस्य याटः प्रतिषेधो वक्तव्यः, न

वक्तव्यः, 'ङ्याप्प्रहणेऽदीर्घ' इति स्थानिवत्त्वनिषेधात्। न च दीर्घत्वे—आवसौ भूतपूर्व इति याट् प्राप्नोति, लाक्षणिकत्वात्। स्थानिवत्त्वे तु—अतिदेशसामर्थ्यान्न लक्षणप्रतिपदोक्तपरिभाषाप्रवृत्तिरित्युक्तम्।

एवञ्च स्पष्टमेवानेन भाष्येण प्राचीनोक्तं विरुध्यत इत्यवसेयम्। न च स्थानिवत्सूत्रस्य—याडाप इति सूत्रस्थाभ्यां तयोरेवाऽऽकारप्रश्लेषो लभ्यत इति कथं सर्वत्राऽऽकारप्रश्लेष इति वाच्यम्, जरसा, जरसे, जरसोः, जरसामित्यादौ दोषवारणाय प्रश्लेषस्यावश्यकत्वेन प्रकृतभाष्ययोरुपलक्षणपरतया व्याख्येयत्वादित्याहुरिति दिक्।

**६४ प्र०—'ङिति ह्रस्वश्चे'ति सूत्रविषये प्राङ्नव्ययोर्मते विशदं वर्णनीये।**

उ०—प्रकृतसूत्रे योगद्वयम्—'ङिति' ह्रस्वश्च' इति, तत्राद्ये 'यू स्त्र्याख्यौ नदी' इत्यङुवङ्स्थानावस्त्री' इति 'वामी'त्यतः 'वे'ति च सम्बद्धयते। तत्र स्त्र्याख्यपदं नित्यस्त्रीत्वार्थकम्। तथा च 'इयङुवङ्स्थानौ स्त्रीशब्दभिन्नौ नित्यस्त्रीलिङ्गावीदूतौ वा नदीसंज्ञौ स्त, इत्यर्थः। 'ह्रस्वश्च' इत्यत्र 'यू' 'नदी' इति, आख्यापदरहितं स्त्रीत्वविशिष्टवाचकत्वार्थकं वा स्त्रीशब्दमात्रं 'ङिति' इति च सम्बद्धयते। 'इत्यङुवङ्स्थाना'विति निवृत्तम्' तथा च 'स्त्रीवाचकौ ह्रस्वाविदुतौ ङिति वा नदीसंज्ञौ स्त' इत्येवार्थ इति—अनियतलिङ्गानामिष्वादीनामपि स्त्रियां नदीसंज्ञा सिद्धयति। 'ङिति ह्रस्वश्चे'त्यत्र नित्यस्त्रीलिङ्गावित्येवं विधो नियमो नाश्रीयत' इति कैयटस्य ह्रस्वांशमात्रविषयत्वात्। दीर्घविषयकस्य तु नित्यस्त्रीलिङ्ग एव प्रवृत्तिरिति 'कटप्रुवे ब्राह्मण्यै, इत्यत्र लिङ्गान्तरविशिष्टार्थाभिधायकत्वेन नित्यस्त्रीत्वाभावान्नदीत्वं न भवतीति **प्राचीनाः।**

**अर्वाञ्चस्तु**—शब्दाधिकारमाश्रित्योभययोगे स्त्रीत्वमात्रवाचकस्य स्त्र्याख्यपदस्य सम्बन्धेन तस्य ङिदाक्षिप्ताङ्गविशेषणत्वेन, 'ङित्परं यदङ्गं स्त्रीबोधकं तद्वा नदीसंज्ञमित्यर्थः सम्पद्यते। एवञ्च 'कटप्रुवे' इत्यत्र नदीत्वमिष्टमेव।

अत एव 'प्रथमलिङ्गग्रहणञ्चे'त्यस्यात्राप्रवृत्त्यन्वाख्यायके—'ह्रस्वौ चेयङुवङ्स्थानौ च प्रवृत्तौ च 'प्राक् प्रवृत्तेः' स्त्रीवचनावेव नदीसंज्ञौभवतो, न तु पुंवाचकाविति वक्तव्यमिति वार्त्तिके 'अतिशकटयै ब्राह्मण्यै' क्व मा भूत्?—अतिशकटये ब्राह्मणाय' अतिश्रियै ब्राह्मण्यै' 'श्रियै ब्राह्मण्यै' क्व मा भूत्—अतिश्रिये ब्राह्मणाय' 'श्रिये

ब्राह्मणायै'ति 'यू स्त्र्याख्या'विति सूत्रशेषे भाष्ये उक्तम्। निरुक्तप्रयोगेषु नित्यस्त्रीत्वाभावात् 'यू स्त्र्याख्या'विति सूत्रस्याप्राप्तौ 'प्रथमलिङ्गग्रहणञ्चे'त्यस्य या प्राप्तिः सा वार्त्तिकेन निराक्रियते, 'ङिति ह्रस्वश्चे'त्यनेन विकल्पो भवतीति भाष्याभिप्रायः। दीर्घघटितवाक्ये चेन्नित्यं स्त्रियां वर्त्तमानमित्यर्थस्त्र्याख्यपदयूसम्बन्धः स्यात्तदा प्रकृतसूत्रस्याप्यप्रवृत्तौ रूपासिद्धया तदसङ्गतिः स्पष्टैव। एवञ्च—समुदायस्य केनापि प्राप्त्यभावात्—अवयवस्य प्राप्तावपि प्रकृतसूत्रेणाङ्गस्यैव विकल्पविधानेन तत्र विकल्पाप्रवृत्तेरस्य निषेधविकल्पत्वमसम्भवि। ततश्च दीर्घांशे क्वचित्प्राप्तौ क्वचनाप्राप्तौ ह्रस्वांशे च सर्वथाऽप्राप्तौ विधिविकल्पत्वमेवास्यानुसन्धेयम्। तथा च—'अत्र नियमो नाश्रीयते' इति कैयटग्रन्थोऽपि वाक्यद्वयपरतया योजनीयः।

निषेधविकल्पपरतया विहितव्याख्यानेन विरोधस्तु नोद्भाव्यः तस्य 'यू स्त्र्याख्या'वित्यस्य नित्यस्त्रीत्वार्थकत्वमजानत एकदेशिनो 'यू इति ह्रस्वयोर्ग्रहणमिति पक्षोपपादने युक्तिभूतत्वेनानादृतत्वात्। तथा हि—'यू' इति—इत्वोत्वावच्छिन्नयोर्ग्रहणम्, न चैवं 'बहुशकटि'रित्यादौ कवापत्तिः, 'यू स्त्र्याख्यौ' 'नेयङुवङ्स्थानौ' 'वामी' त्येतदुत्तरं ङिती'ति विभक्ते योगे 'नेयङुवङ्स्थानवस्त्री' 'वा' 'नदी'त्यनुवृत्त्या निषेधविकल्पं स्वीकृत्याग्रिमे 'ह्रस्वा'विति न्यासे—इयङुवङ्स्थानौ वे'ति निवर्त्य 'ङिति' 'नदी' त्यनुवर्त्य 'ङित्येव यूह्रस्वौ नदी'त्येवं नियमेनादोषादिति। एवं शकटयादिशब्देषु नदीत्वस्य 'ङित्येवे'ति नियमेन वारणेऽपि इप्वादिषूभयलिङ्गे नदीत्वानापत्तिः अतः 'स्त्र्याख्या'वित्यस्य नित्यस्त्रीत्वमजानत एकदेशिना' इत्यवश्यमङ्गीकार्यमिति तात्पर्यम्।

ननु यथा 'चञ्चा ब्राह्मणान्पश्ये'त्यादौ युक्तवद्भावेन स्वगतस्त्रीत्वानयनेन नत्वविरहस्तत्प्रत्याख्यानेऽपि दारादिशब्दवत् स्त्रीत्वेन पुंस्त्वबोधकत्वात्, पुंस्त्वमात्रबोधकत्वाभावेन नत्वाभावः 'पुंस्त्वे वाच्ये नत्वमित्यर्थात्। न चैवं 'खरकुटयै' इत्यत्रापि युक्तवद्भावेन नित्यस्त्रीत्वात्सूत्रेणैव सिद्धमिति वाच्यम्' 'स्त्र्याख्यौ' इत्यस्य स्त्रीत्वविशिष्टमेव च आहे'त्यर्थात्। प्रकृते स्त्रीत्वेन रूपेण वस्तुतः पुंस्त्वविशिष्टस्याभिधानात्। एवं—श्रीशब्दात्कनि लुपि 'श्रिये ब्राह्मणायै' त्यादौ विकल्पापत्तिः, युक्तवद्भावेन स्त्रियामङ्गस्य वर्त्तमानत्वात्, प्रकृतसूत्रे नित्यस्त्रीत्वानिवेशाच्चेति चेन्न, सत्यभिधाने इष्टत्वात्। भाष्ये दृश्यमानं 'श्रिये ब्राह्मणायै'ति तु क्यजन्तात्क्विबोध्यमिति दिक्।

# अथ अजन्तनपुंसकलिङ्गप्रकरणम् ॥ ९ ॥

**६५ प्र०—'अतोऽम्' इति सूत्रे 'अम्' इतिच्छेदो 'म्' इतिच्छेदो वा न्याय्य इति सोपपत्तिकं विवेचयत।**

उ०—ननु ज्ञानमित्यादौ 'अतोऽम्' इति सूत्रेणाम्विधानापेक्षया 'म्' इति विधानेऽपि रूपे वैषम्याभावेन प्रक्रियालाघवात् मादेशविधानपक्ष एव समीचीन इति चेन्न, मादेशविधानस्वीकारे ज्ञानमित्यादौ 'सुपि च' इति दीर्घापत्तेः। न च मादेश पक्षेऽपि सन्निपातपरिभाषया दीर्घवारणं भविष्यतीति वाच्यम्? तथा सति 'हे ज्ञान' इत्यादौ सम्बुद्धिलोपानापत्तेः। मनिमित्तस्य प्रकृतिप्रत्ययसन्निपातस्य प्रत्यय-लोपेन विनाशात्। अत एव एङ् ह्रस्वादिति सूत्रे ज्ञानेत्यादौ मलोपाय कतरदित्यादौ लोपवारणाय चाङ्गाक्षेपव्यधिकरणान्वयहल्पदानुवर्तनानि गौरवावहान्यपि भाष्यकृता फलमुखगौरवस्य दोषानाधायकत्वदृष्ट्या सोढानि न तु 'म्' इतिच्छेदः कथमपि सोढः। यदि 'म्' इतिच्छेदो भाष्यकृतामभिप्रेतः स्यात्तदा 'वर्णग्रहणे च सर्वत्रेति-तदन्तविध्यर्थमङ्गाक्षेपमात्रं कर्तव्यम्। 'येन यदाक्षिप्तं तत्तस्य विशेषणम्' इति न्यायेन तादृशाङ्गात्परा या सम्बुद्धिरित्येव लाघवाद्वदेत् वैयधिकरण्येनान्वयं हल्पदानुवृत्तिञ्च न कुर्यादिति भावः। नचामादेशपक्षे सिद्धेऽपि ज्ञानमित्यादौ 'स्वमोर्नपुंसकात्' इति लुक् कुतो नेति वाच्यम्? येन नाप्राप्तिन्यायेन निरवकाशतया लुकम्प्रबाध्य ततः पूर्वमेवाम्भावस्य प्रवृत्तेरिति।

**६६ प्र०—'परमकतरं कुलम्' परमकतरत्कुलमिति नव्यप्राचीन-सम्मतयोः प्रयोगयोर्वैलक्षण्ये को हेतुः? अनयोर्मतयोः कतरद्धु ज्याय इति सप्रमाणं निरूपयत।**

उ०—डतरादिभ्य इति ल्यब्लोपे पञ्चमी, अर्थपरश्चायं निर्देशो लक्षणया। एतदर्थमेव बहुवचननिर्देशः।' एवञ्च डतराद्यर्थगतसंख्याभिधायिनोः स्वमोरद्डित्यर्थ-द्वारकविधानाश्रयणेन परमकतरत्कुलमिति रूपं सिद्ध्यतीति **प्राचीनाः।**

**नवीनास्तु**—अर्थद्वारकविधानाश्रयणेन यदि डतराद्यर्थगतसंख्याभिधायिन इत्यर्थस्तदा पञ्चम्यन्तात्तादृशार्थप्रतीत्यसम्भवः, यदि षष्ठ्यर्थे पञ्चमी तदा 'विरुद्ध-विभक्तित्वाविति भाष्यासङ्गतिः, विधानस्य सर्वथाऽनाश्रयणेनार्थद्वारकं विधानमिति अन्यथासङ्गतिश्चेति प्राचीनोक्तौ दोषमुद्भाव्य 'अङ्गस्येति षष्ठी डतरादिभ्य इति पञ्चमी, तत्राशक्यं विरुद्धविभक्तित्वाद्डतरादिभ्य इत्यनेनाङ्गस्येति विशेषयितु, तत्र किमन्य-

च्छक्यं विशेषयितुमन्यदतो विहितात्प्रत्ययात्, डतरादिभ्यो यो विहित' इति भाष्यसरणिमनुसृत्य 'डतरादिभ्यो विहितयोः स्वमोरङ्गसंज्ञानिमित्तयोरित्यर्थं स्वीचक्रुः, एवञ्च परमकतरं कुलमित्यत्र डतरान्ततदादेर्विहितत्वाभावान्नाद्ड् ।

न चैवमुपसर्जनप्रतिषेधारम्भस्य वैयर्थ्यं स्यादिति वाच्यम्, तत्प्रत्याख्यानायैव निरुक्तभाष्यप्रवृत्तेः । परमकतरादिव्यावृत्तयेऽङ्गीकृतेन विहितविशेषणेनैवातिकतरादिव्यावृत्तिसिद्धौ—उपसर्जनप्रतिषेधो निरर्थक इति तदभिप्रायः ।

**वस्तुतस्तु**—'संज्ञोपसर्जनीभूतानां प्रतिषेध' इति प्रतिषेधवार्त्तिकारम्भकल्पे यथा सर्वस्मै, परमसर्वस्मै, अतिसर्वाय, कतरत्, अतिकतरम् इत्यादिरूपाणि भवन्ति, तथा तत्प्रत्याख्यानकल्पेऽपि तथैव रूपाणि यथा भवेयुस्तथा वक्तव्यम् । नवीन रीत्या 'अङ्गाधिकारे यदुच्यते' इति प्रत्याख्यानकल्पे तु–'सर्वादीनि, इत्यत्र यदि तदन्तविधिस्तदा–'अतिसर्वात्' 'अतिसर्वाय' 'अतितत्' 'अतिकतर'मित्यादौ दोषो दुरुद्धरः स्यात् । यदि च तत्र तदन्तविधिर्नास्ति–तदा 'परमसर्वे' 'परमसर्वस्मै' 'स्परमकतरत्' 'परमसः' 'परमसर्वत्रेत्यादिरूपाणि न सिद्ध्यन्तीति- 'गृह्यमाणविभक्ते' रित्यस्य–गृह्यमाणार्थगतसंख्याभिधायिविभक्तौ परतः कार्याणि भवन्तीत्यस्य,–गृह्यमाणार्थगतसंख्याभिधायिविभक्तेः कार्याणि भवन्तीत्यस्य चोपलक्षणतया निरुक्तभाष्यस्यावश्यं व्याख्येयत्वेन—'परमकतरमित्येव भवति, न तु 'परमकतरदिति शेखरकृतायुक्तिः साहसमात्रमेव । 'अद्डतरादिभ्यः'–इत्यस्य—'डतरान्ततदादि–डतमान्ततदादि—अन्य—अन्यतर—इतरे'त्येतदर्थगतसंख्याभिधायिनौ–यौ–एतदव्यवहितोत्तरौ च—स्वमौ तयोरद्डित्यर्थः । एवञ्च परमकतरदित्येव समीचीनमित्यवसेयमिति दिक् ।

**६७ प्र०—'ह्रस्वो नपुंसके प्रातिपदिकस्ये'ति सूत्रे 'सत्त्वप्रधानस्ये'त्यर्थः कुतो लभ्यते । किञ्च तत्फलमिति प्रतिपाद्य पदकृत्यप्रदर्शनपुरस्सरं निर्दुष्टं सत्त्वप्रधानत्वं परिष्क्रियताम् ।**

**उ०—अयं भावः**—'ह्रस्वो नपुंसक' इति सूत्रे प्रातिपदिकग्रहणाभावेऽपि क्लीववदर्थे वर्त्तमानस्याजन्तस्येत्यर्थेनैव धातुतिङन्तादिव्यावृत्तौ सामर्थ्यादेव प्रातिपदिकलाभे प्रातिपदिकग्रहणं व्यर्थं सत् सत्त्वप्रधानेत्यर्थलाभार्थम् । न च 'वारिणी'त्यादौ ह्रस्वचारणाय प्रातिपदिकग्रहणं चरितार्थम्, यद्यपि 'वारिणी'त्यादौ दीर्घशीविधानसामर्थ्येन नोक्तदोष इति वक्तुं शक्यते, तथापि 'वारिणे, 'वारिणा' इत्यादौ ह्रस्वचारणायैव प्रातिपदिकग्रहणं चरितार्थमिति वाच्यम्, अर्थवत्सूत्रा-

त्प्रातिपदिकग्रहणमनुवर्त्य षष्ठ्या विपरिणामेनोक्तदोषवारणात्प्रातिपदिकग्रहणवैयर्थ्यस्यैव सत्त्वात्। सत्त्वप्रधानप्रातिपदिकस्येत्यर्थे फलन्तु 'काण्डे' इत्यस्य पूर्वान्तवद्भावेन प्रातिपदिकत्व–नपुंसकत्वविशिष्टबोधकत्वस्य च सत्त्वेन प्राप्तह्रस्वत्ववारणमेवेति ध्येयम्।

ननु सत्त्वं द्रव्यं तत्प्रधानं यस्येति व्युत्पत्त्या सत्त्वनिष्ठविशेष्यताकबोधजनकत्वमेव सत्त्वप्रधानत्वम्। 'काण्डे' इत्यत्र प्रत्ययार्थाधिकरणत्वस्यैव विशेष्यतया काण्डरूपद्रव्यस्य तत्प्रतिविशेषणत्वेनादोषः।

न च काण्डत्वनिष्ठप्रकारतानिरूपितविशेष्यताया अपि काण्डरूपद्रव्ये सत्त्वेन दोष एवेति वाच्यम्, मुख्यविशेष्यताया निवेशेनादोषात्।

ननु विभक्तेर्द्योतकत्वेन द्योत्यार्थस्य प्रकृत्यर्थे विशेषणतयैव मानम्, अधिकरणत्वशक्तिमान् क्रियाकारकभावश्च सप्तम्यर्थः–तत्राधिकरणत्वशक्तिमतश्च प्रकृत्यर्थेऽभेदेनान्वयः। क्रियाकारकभावश्च प्रकृत्यर्थसंसर्गतया भासते। तथा चाधिकरणत्वशक्तिमदभिन्नकाण्डविशिष्टा क्रियेति बोध इति शेखरकृतस्सिद्धान्तः। तथा च काण्डनिष्ठा मुख्यैव विशेष्यता। न च तावतापि क्रियानिष्ठविशेष्यतानिरूपितप्रकारतायास्तत्र सत्त्वेनामुख्यत्वमेवेति वाच्यम्, इतरपदप्रयोज्यविशेष्यतामादाय दोषनिस्तारस्य श्रीपमस्तीत्यादावप्यस्तिक्रियामादाय दोषापत्त्या वक्तुमशक्यत्वात्। तादृशविशेष्यताव्यावृत्तिस्तु–द्रव्यविशिष्टस्य प्रातिपदिकस्य ह्रस्वः। वैशिष्ट्यञ्च—स्वनिष्ठविशेष्यताप्रयोजकत्वस्वनिष्ठप्रकारतानिरूपितविशेष्यत्वाप्रयोजकत्वैतदुभयसम्बन्धेनेत्यर्थेनेत्यवगन्तव्यमेवञ्च 'काण्डे' इत्यादौ दोष एवेति चेत्, अत्रोच्यते—यद्यपि संसर्गतया भासमाने विशेष्यता न भवत्यपि तु संसर्गतैव, तथापि प्रतियोगिनम्प्रति प्राधान्यमस्ति। तम्प्रति प्रतियोगिनश्चाप्राधान्यम्। संसर्गनिष्ठप्रधानताप्रयोजिका सप्तम्येव। राज्ञः पुरुष इत्यादौ स्वत्वादेस्संसर्गस्य षष्ठीवाच्यिकेति भाष्येणान्विताभिधानवादाश्रयणात्। प्रकृते च सप्तम्याः 'काण्डे' इत्यत्रैवान्तर्भावात् क्रियाकारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वं 'काण्डे' इत्यस्यैव, स्वनिष्ठप्रधानताख्यविषयाप्रयोजकत्व–स्वनिष्ठाप्रधानतानिरूपितप्रधानताख्यविषयत्वाप्रयोजकत्वोभयसम्बन्धेन द्रव्यविशिष्टप्रातिपदिकस्य ह्रस्व इत्यर्थः। प्रकृते च काण्डनिष्ठाप्रधानतानिरूपित क्रियाकारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वेन 'काण्डे' इत्यस्य ह्रस्वो न।

नन्वेमपि 'काण्डे तिष्ठतः' इत्यादावाख्यातार्थे काण्डप्रतियोगिकाभेदस्याकांक्षाभास्यतया तन्निष्ठप्रधानताप्रयोजकत्वस्य 'काण्डे' इति प्रथमान्तस्याभावे प्रथमार्थ-

संख्यायाश्चाभेदेन विशेषणस्थलेऽविवक्षितत्वेन विशेषणतयैव प्रकृत्यर्थे भानेन वा पूर्वान्तवद्भावेन प्रातिपादिकत्वेन च ह्रस्वो दुर्वार इति चेन्न । 'अभिहिते प्रथमे'ति वार्त्तिकात्, प्रथमाया अपि अन्याभिहितकर्त्तृत्वादिशक्तिमान् क्रियाकारकभावश्चार्थो वोध्यः, पूर्ववत् 'कटं भीष्मं कुरु' अत्र कटोऽपि कर्मभीष्मादयोऽपि कर्मेति भाष्यात्- 'कारकाणां क्रियायामन्वय' इति भाष्योक्तनियमाच्चाभेदेन विशेषणस्यापि क्रियाकारकभावसम्बन्धेन क्रियायामेवशाब्दोऽन्वयोऽभेदान्वयश्चाख्यातार्थादिना पार्ष्ठिको मानसस्तथा सति 'काण्डे' इत्यस्य क्रियाकारकभावसंसर्गनिष्ठप्रधानताप्रयोजकत्वेनाख्यातार्थेऽभेदान्वयेऽप्यभेदस्य विशेषणविभक्त्यर्थस्यैवोक्तरीत्या संसर्गतया भानेन तन्निष्ठप्रधानताप्रयोजकत्वेन च ह्रस्वाप्राप्तेरिति ।

## अथ हलन्तपुँल्लिङ्गप्रकरणम् ॥ १० ॥

**६८ प्र०—'दादेर्धातोर्घ' इति सूत्रे–उपदेश इत्यर्थलाभः कथमिति शेखरोक्तदिशा सप्रमाणं प्रतिपादयत ।**

**उ०—शेखरकृता**—दादिपदस्यौपदेशिकदादित्वविशिष्टे लक्षणा कृता–एवञ्चोपदेशे दादेर्धातोर्हस्य घ इत्यर्थः सम्पद्यते । तत्र प्रमाणं हि प्रकृतसूत्रस्थं भाष्यमेव । तथा हि—धुगित्यादौ 'घत्वस्यासिद्धत्वाड्ढत्वं प्राप्नोती' त्याशङ्क्य–अपवादत्वाद्घत्वमिति समाधाय, अथवा 'होढोऽदादेरित्येको योगः, 'धातो' रित्यपरो योगस्तत्र पूर्वयोगान्नञ्रहितस्य दादेरित्यस्य धातोरित्युत्तरयोगेऽनुवृत्तिरित्युक्तम् । एवञ्च दाद्यवयवभिन्नस्य हस्य ढ इति—दादिधात्ववयवस्य हस्य घ इति च क्रमेणोभयोर्योगयोरर्थः ।

तथा च धुगित्यादौ दाद्यवयवत्वेन पूर्वयोगेन ढत्वाप्राप्त्या 'धातोः' इत्युत्तरयोगेन घत्वसिद्धिरिति पक्षान्तरेण समाहितम् । धात्ववयवहत्वरूपव्यापकधर्मावच्छिन्नोद्देश्यताकघत्वस्य—धात्ववयवभिन्नहत्वरूपव्याप्यधर्मावच्छिन्नोद्देश्यताकढत्वेन बाधादेवादादौ घत्वाप्राप्तेः 'धातो'रित्युत्तरयोगे भाष्यकृत्कृतदादे' रित्यनुवृत्तेः फलाभावेन तद्वयर्थं सदौपदेशिकदादित्वविशिष्टस्य लक्षणया वोधकम् । अर्थाधिकारानुरोधाच्च पूर्वत्र 'होढोऽदादे'रिति निषेधसमर्पकेऽपि दादिपदस्यौपदेशिकदादित्वविशिष्टपरतया- औपदेशिकदादित्वविशिष्टावयवभिन्नस्य हस्य ढ इत्यर्थेन नामधातुविषये दामलिडित्यत्र ढत्वघत्वाभावौ सिद्धौ—'अधो'गित्यत्र घत्वढत्वाभावौ च सिद्धौ ।

ननु—तदनन्तरमागमसमभिव्याहारे—आगमविशिष्टस्यैव धातुत्वात्तस्य न

दादित्वाभावादधोगित्यत्र घत्वं न प्राप्नोतीत्याशयेन 'घोऽदादे'रित्युच्यते, कथ'मधो'-गित्याशङ्क्य 'धातोरवयवो यो दादिरिति वैयधिकरण्यान्वयेन समाहितं भाष्ये । तत्र सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वशङ्कया गर्द्धवित्याद्यर्थमुत्तरसूत्रे 'धातो'रित्यस्य तथान्वयस्य कर्त्तव्यत्वादत्राप्यर्थाधिकारानुरोधात्तथाऽन्वय इत्युक्तन्तद्विरुध्येत, दादिपदस्यौपदेशिकदादित्वार्थकत्वेऽधोगित्यत्रापि तत्सत्त्वेन शङ्काया वैयधिकरण्यान्वयरूपसमाधानस्य च निस्सारत्वादिति चेन्न, दादिपदस्यौपदेशिकत्वार्थकत्वमजानता एकदेशिना उक्तत्वेनाविरोधित्वात् ।

तत्रोत्तरार्थमावश्यकमिति वदतो तस्येहानावश्यकत्वध्वननेन दादिपदस्यौपदेशिकदादित्वार्थकत्वं ध्वनितमित्यवगन्तव्यमिति दिक् ।

**६६ प्र०—'अदुहितरा' मित्यत्र 'इग्यण' इति सम्प्रसारणत्वाद्दीर्घापत्ति सप्रमाणं निवार्य्य 'अक्षद्यरुण' इत्यादौ पूर्वरूपापत्तिवारणोपायो दर्शनीयः ।**

उ०—ननु 'इग्यणः सम्प्रसारण' मित्यनेन यणः स्थाने प्रयुज्यमानस्येकः सम्प्रसारणत्वे 'अदुहितरा'मित्यादौ लस्योत्तमैकवचने इटि तस्य सम्प्रसारणत्वापत्त्या 'हल' इति दीर्घापत्तिः, न च यथासंख्यसम्बन्धान्न दोष इति वाच्यम् , लृकारग्रहणस्य यथासंख्येन सम्बन्धायावश्यकत्वे लृकारोपदेशप्रयोजनशङ्कासमाधानपरकस्य ऋलृक्सूत्रे 'लृकारोपदेशः किमर्थः ?' इत्यादिभाष्यस्यासङ्गत्यापत्तेरिति चेन्न, विधिप्रदेशेषु 'यण इ'गित्येव सिद्धे संज्ञाविधानसामर्थ्येन तद्भावितपक्षाश्रयणात् सम्प्रसारणशब्दपूर्वकं यणः स्थाने विधीयमानस्येत्याद्यर्थकरणेन दोषाभावात् । अत्र प्रमाणन्तु 'यणः स्थान इग्भवती'ति वाक्यस्य संज्ञापक्षे विधिप्रदेशे वाक्यस्य कार्यासम्भवेन 'सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहणमिति भाष्य उक्ततया तेन फलैक्याय वर्णसंज्ञापक्षे तद्भावितस्य संज्ञेति भाष्ये सूचनमेव ।

सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहणादेव 'अक्षद्यूश्च अरुणश्च = अक्षद्यरुण' इत्यादौ पूर्वरूपं न भवति । न च 'सम्प्रसारणपूर्वरूपत्वे समानाङ्गग्रहण'मित्यनेन 'सम्प्रसारणाच्चे'त्यस्य सम्प्रसारणनिमित्तकप्रत्ययनिमित्तकाङ्गसंज्ञावद्घटकेऽचीत्यर्थादेव तत्र पूर्वरूपापत्तिवारणसम्भवे सम्प्रसारणजातस्येत्याद्यर्थस्य न तत्फलमिति वाच्यम्' 'समानाङ्गग्रहण'मित्यस्य भाष्ये प्रत्याख्याततत्वात् । तथा च भाष्यम्—'सकृद्दर्थ मित्यादौ पूर्वत्वमाधाय समानाङ्गग्रहणं कार्यं ? न कार्यम् । सम्प्रसारण-

त्वात्। अन्योऽयं सम्प्रसारणासम्प्रसारणयोः स्थाने एक आदिश्यते, यदि नेदं सम्प्रसारणं 'हल' इति दीर्घत्वं न प्राप्नोति' वचनप्रामाण्याद् ('हल' इति सूत्रारम्भसामर्थ्याद्) भविष्यति' इति। एवञ्च स्पष्टमेवानेन भाष्येण समानाङ्गग्रहणस्य प्रत्याख्यातत्वात् 'सम्प्रसारणजातस्य सम्प्रसारणग्रहणेन ग्रहण' मित्यस्य फलं 'अक्षद्युवरुण' इत्यादि भवतीत्यवसेयमिति दिक्।

**७० प्र०—विधेयविषयानुवादविषययोरुच्चारणार्थानां निवृत्त्युपायं सप्रमाणम्प्रदर्श्य द्यौरित्यादौ तित्स्वरितापत्तिर्वार्यताम्।**

उ०—ननु अनुवादविषये 'आतो धातो'रित्यादौ 'धातुप्रातिपदिकप्रत्ययनिपातागमादेशानामेव भाष्ये व्यवसितपदार्थत्वेनोक्तत्वादुच्चारणार्थानां व्यवसितान्त्यत्वाभावेन 'हलन्त्य'मित्यादिसूत्राप्रवृत्तेरुच्चारणार्थवर्णघटितसमुदायस्य स्वघटकसाजात्यसम्बन्धेनोच्चारणार्थवर्णरहिते लक्षणया निर्वाहेऽपि—विधेयस्थले विधेयबोधकपदे शक्यादन्यो लक्ष्यार्थः स्वबोधकत्वसम्बन्धेन नास्तीत्यर्थकेन 'न विधौ परः शब्दार्थ' इति न्यायेन लक्षणाया निषेधादुच्चारणार्थानामपीत्संज्ञयैव निवृत्तिरुचिता। अन्यथा—'ङित्त्वाभावेऽदादेशे पूर्वसवर्णदीर्घमाशङ्क्य (उच्चारणार्थत्वादित्यसमाधाय)—अनुनासिकोपधत्वा' दिति समाधानपरस्य 'अदड्' सूत्रस्थभाष्यस्य प्रामाण्येनापूर्वविधित्वात् तान्तस्य विधानमित्यस्याप्यापत्तेः। न चोच्चारणार्थत्वमुत्तरवर्णस्य पूर्ववर्णोच्चारणे साहाय्यसम्पादकत्वरूपं 'हयवरट्' इत्यादौ दृष्टं न तु पूर्ववर्णस्यैवञ्च तदभिप्रायवतैव भाष्यकृता 'अदड्' सूत्रे—उच्चारणार्थत्वेन न समाहितमिति न तन्निरुक्तार्थे प्रमाणं भवितुमर्हतीति वाच्यम्, एवमपि द्वितीयवर्णोच्चारणे सहायसम्पादनेन चरितार्थेषु तत्र तत्र विशेषणार्थेष्विव प्रकृतेऽपि हलन्त्यसूत्राप्रवृत्तौ प्रमाणाभावात्। निरुक्तार्थे प्रमाणन्तु 'तित्स्वरित'मिति सूत्रस्थं भाष्यमेव। तत्र हि—'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकस्य द्युभ्यामित्यादौ तदभावः फलमित्युक्तम्। आदेशेषु सर्वत्र तकाराणामुच्चारणार्थत्वेनैव निवृत्त्यङ्गीकारे द्युभ्यामित्यादौ स्वत एव स्वरितत्वाप्राप्त्या वार्त्तिकस्य 'द्युभ्यामित्यादौ तदभावः फल'मिति कथनपरभाष्यस्य चासङ्गतिः स्पष्टैव, एवमज्विधेयस्थलेऽप्युच्चारणार्थानामनुनासिकत्वेनेत्संज्ञा भवतीत्यवगन्तव्यम्। अत एव 'वेरपृक्तस्ये'त्यत्रापृक्तग्रहणाभावे 'दर्वि'रित्यत्र लोपमाशङ्क्य 'अनुनासिकपरस्य वेर्ग्रहणम्' इति भाष्ये समाहितम्। [ तत्रानुनासिकपरस्येत्यस्य–अनुनासिकः परोवयवो यस्येत्यर्थः। तादृशश्च किवादिरेव तेष्विकारस्योच्चारणार्थमुच्चारितस्यानुनासिकत्वादुपदेशेऽजित्यनेनेत्संज्ञया

निवृत्तिरित्युक्तम्भवति ] उच्चारणार्थानां विनैवेत्संज्ञां निवृत्तावनुनासिकपरस्य वेः कुत्राप्यभावेन सूत्रस्य निर्विषयत्वं स्यादित्यवसेयम्। 'इदितो नुमि'ति सूत्रस्थमपि भाष्यं निरुक्तार्थे प्रमाणम्। तत्र हि—धातोरित्यस्याभावे सिच इदित्वादभैत्सी' दित्यादौ नुममाशङ्क्य सजादेशकरणेन समाहितम्। विधेयविषये उच्चारणार्थानामित्संज्ञां विनैव निवृत्त्यभ्युपगमे तु तत्रोच्चारणार्थत्वेनैव नुमापत्तिवारणसम्भवे सजादेशकरणपरभाष्यासङ्गतिर्दुर्वारैव स्यात्। एवं हि ल्युडादावप्युकारादेरित्संज्ञयैव निवृत्तौ तदादेशस्य स्थानिवद्भावेनोगित्वात् ङीपापत्तिस्तु नाशङ्कनीया, ल्युडादावुकारस्येत्संज्ञां विनैवानकाभ्यां निवृत्तेरङ्गीकारात्।

तत्रत्योकारेऽनुनासिकत्वाकल्पनादेव—नन्द्यादिभ्यो ल्युप्रत्यये 'नन्दने'ति टावन्तप्रयोगो 'गाङ् लिटी'ति सूत्रे भाष्ये प्रतिपादितम्। अन्यथा ङीपापत्त्या भाष्यासङ्गतिः स्यात्। एवञ्च 'द्यौ'रित्यत्रौकारस्य तित्स्वरितापत्तिरिति चेन्न, दिव इकारस्योदात्तत्वेनानुदात्तस्य हलः जायमानौकारस्यानुदात्तत्वेनेकारस्य यणि 'उदात्तस्वरितयोर्यण' इत्यनेनैव स्वरितसिद्ध्या 'तित्स्वरित'मिति सूत्रप्रवृत्तौ फलाभावात्। 'तिति प्रत्ययग्रहणं कर्त्तव्य'मिति वार्त्तिकेन तदप्राप्तेश्चेति दिक्।

**७१ प्र०—'चतुर्ण्णा' मित्यत्र परत्वाण्णत्वात् पूर्वं द्वित्वस्यैव प्राप्त्या पूर्वं द्वित्वन्ततो णत्वमित्येव कुतो नोक्तमिति शेखरोक्तदिशा वर्णयन्तु।**

उ०—ननु 'चतुर्ण्णा'मित्यत्र परत्वात्पूर्वं द्वित्वस्यैव प्रवृत्त्या पूर्वं द्वित्वन्ततो णत्वमित्येव वक्तव्यमिति चेन्न, पूर्वत्रासिद्ध'मित्यनेन द्वित्वस्यासिद्धत्वात् पूर्वं णत्वस्यैव प्राप्तेः।

ननु 'पूर्वत्रासिद्धीयमद्वित्वे' इति 'पूर्वत्रासिद्ध'मित्यस्याप्रवृत्त्या परत्वात्पूर्वं द्वित्वमेव युक्तम्। न च वर्णद्वित्वे तदप्रवृत्तिरिति वाच्यम्, 'वाक्' 'वाक्क्' इति भाष्योदाहरणसिद्धये वर्णद्वित्वेऽपि तत्प्रवृत्तेरावश्यकत्वात्।

अन्यथा चर्त्वस्यासिद्धत्वात् गस्यैव द्वित्वेऽन्त्यस्य 'वावसाने' इत्यनेन चर्त्वेऽवसानचर्त्वस्यासिद्धत्वात् 'खरि चे'त्यनेन पूर्वगकारस्य चर्त्वाभावे पूर्वत्र गश्रवणापत्तिः। न च वर्णद्वित्वविषये परिभाषाप्रवृत्तावपि कस्य द्वित्वेऽप्यवसानचर्त्वस्यासिद्धतया गकारे झशि परे पूर्वस्य 'झलां जश् झशी'त्यनेन जश्त्वेऽवसाने चर्त्वस्यासिद्धत्वेन तस्य चर्त्वाभावे गश्रवणं दुर्वारमेवेति वाच्यम्, 'न मुने' इतिवत् 'पूर्वत्रासिद्धीय' मित्यस्य द्वित्वे कृतेऽपि प्रत्यासत्त्या 'द्वित्वाश्रयस्य कार्ये कर्त्तव्येऽसिद्धत्वं न'त्येतादृश-

स्याप्यर्थस्याङ्गीकारेण 'झलां जश्' इति जश्त्वे चर्त्वस्यासिद्धत्वाभावादिति चेन्न पूर्वत्रासिद्धीयमित्यस्य द्वित्वे कर्त्तव्येऽन्यदसिद्धं नेत्येवार्थो न तु द्वित्वस्याप्यसिद्धं नेति तदर्थ इति णत्वोत्तरमेव द्वित्वप्राप्तेरिति दिक्।

**७२ प्र०—'न लोपः सुप्स्वरे'ति सूत्रविहितनियमाकारं ससङ्कोचं प्रदर्श्य नियमफलितान्यनिवृत्तौ प्रमाणं सोपपत्तिकं प्रतिपाद्य च संज्ञाविधौ न लोपासिद्धत्वे फलं प्रतिपादयत।**

**उ०—अयं भावः**—नियमस्य निषेधमुखेन प्रवृत्तौ प्राप्तबाध–स्वार्थत्याग-परार्थकल्पनादिदोषप्रसङ्ग इति नियमशास्त्राणां विधिमुखेनैव प्रवृत्तिरङ्गीकार्या। एवञ्च विधिमुखेन प्रवृत्तिरिति पक्षे—नियामकशास्त्रीयोद्देश्यतावच्छेदकव्यापकं नियम्य-शास्त्रीयोद्देश्यतावच्छेदकव्याप्यञ्च यद्रूपं तद्रूपावच्छिन्नातिरिक्तत्वेन नियम्यशास्त्रीयो-द्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः। प्रकृते च तादृशं रूपं पूर्वविधित्वं तदवच्छिन्ना-तिरिक्तत्वेन पूर्वत्रेत्यत्र सङ्कोचे नलोपविधायके 'पूर्वत्रासिद्ध' मित्यस्याप्रवृत्तिर्भवति। तथा च 'पूर्वत्रे'त्यनेन नलोपासिद्धत्वाप्राप्त्या 'नलोपः सुप्स्वर' इत्यस्य सुवादिविधौ नलोपासिद्धत्वविधानेन विधित्वमिति बोध्यम्। ननु नियमशास्त्राणां विधिमुखेन प्रवृत्त्यङ्गीकारेऽन्यनिवृत्तिर्नोपपद्यत इति चेन्न, नियमफलितान्यनिवृत्तेरभ्युपगमात्।

[ **अयं भावः**–'**विधिरत्यन्तमप्राप्तौ**' '**नियमः** पाक्षिके सति'। तत्र चान्यत्र च प्राप्तौ **परिसंख्ये**ति गीयते॥ इति **मीमांसकानां** सामान्यतो विधित्रयविषयिणी व्याख्या। तदेवं—'स्वर्गकामो यजेते'त्यादिर्विधिः। 'व्रीहीनवहन्ती'ति नियमः। 'पञ्च पञ्च नखा भक्ष्या' इति परिसंख्या। **वैयाकरणैश्च**—परिसंख्यापि नियमे इव स्वार्थस्य तात्पर्यलभ्यान्यनिवृत्तेश्चात्रावश्यकरणीयतायाः प्रतीतेः नियम-सत्त्वान्नियमशब्देन व्यवह्रियते। 'पञ्च पञ्च नखा' इत्यस्य परिसंख्यात्वेऽपि भाष्ये नियमसत्वेन व्यवहारस्तु–अन्यनिवृत्त्या साम्यमात्रेणेति। ]

नियमस्थलेऽन्यनिवृत्तेः फलितत्वे प्रमाणन्तु—पस्पशाह्निकस्थं भाष्यमेव तत्र हि—

'किं शब्दापशब्दयोरुभयोरुपदेशः कार्यः? उतान्यतरोपदेशः? अन्यतरोपदेशेन कृतं स्यात्'—तद्यथा भक्ष्यनियमेनाभक्ष्यप्रतिषेधो गम्यते, 'पञ्च पञ्च नखा भक्ष्या' इत्युक्ते गम्यते एतत्–अतोऽन्ये न भक्ष्या इति। अभक्ष्यप्रतिषेधेन भक्ष्य-नियमः, तद्यथा—'अभक्ष्यो ग्राम्यकुक्कुट' इत्युक्ते गम्यते एतत्–आरण्यो भक्ष्य इति, एवमिहापि गौरित्युपदिष्टे, गम्यते एतत् गाव्यादय अपशब्दा इति। गाव्या-

दिषु चोपदिष्टेषु गम्यते एतत्–'गौरित्ययं शब्द इति' इत्युक्तम् । तत्र सुशब्दोपदेशः साधुत्वबोधनद्वारा प्रयोगविध्यर्थः । अपशब्दोपदेशस्तत्प्रतिषेधार्थः । अत्र भाष्ये । 'गम्यते' इत्युक्त्या-तस्य तज्जन्यशाब्दबोधाविषयत्वं स्पष्टमेवोक्तम्' इति ।

संज्ञाविधौ नलोपासिद्धत्वे घित्वाप्राप्त्या 'द्वन्द्वे घी'त्यस्याप्रवृत्त्या पूर्वनिपातनियमाभावेन 'दत्त सु—दण्डिन् सु' इति विग्रहे 'दत्तदण्डिनावि'त्यस्य 'दण्डिन् सु–दत्तसु' इति विग्रहे 'दण्डिदत्ता'वित्यस्य च द्विविधस्यापि भाष्यप्रयोगस्य सिद्धिर्भवतीति फलम् ।

नलोपासिद्धत्वाभावे तु–नलोपे दण्डिशब्दस्य घित्वे 'द्वन्द्वे घी'त्यस्य प्रवृत्या पूर्वनिपातनियमात् 'दण्डिदत्ता'वित्येव सिद्धयेत, न तु 'दत्तदण्डिना'विति ।

न च पूर्वनिपाते नलोपो, नलोपे च घित्वे पूर्वनिपात, इत्यन्योन्याश्रयप्रसङ्ग इति वाच्यम्, 'यस्य पूर्वपदत्वे घित्वं भावि—तत्पूर्वमेव प्रयोक्तव्यमिति 'द्वन्द्वे घी'त्यस्यार्थाश्रयणेनादोषात् । न च घित्वे बहिरङ्गतयैव नलोपासिद्धत्वेन द्विविधस्यापि प्रयोगस्य सिद्धौ नेदं 'संज्ञाविधा'वित्यस्य फलमिति वाच्यम्' संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणादिति दिक् ।

**७३ प्र०—पन्था इत्यादौ सानुनासिकाकारवारणोपायः सविशदं प्रतिपाद्यताम् ।**

उ०—ननु 'पथिमथ्यृभुक्षे'ति सूत्रे निरनुनासिकाकारोच्चारणेऽपि तपरसूत्रस्याऽणीव विधीयमानेऽपि प्रवृत्त्या 'पन्था' इत्यादौ नस्यान्तरतम्यात् सानुनासिक एवाकारः स्यात् । न च तपरसूत्रेऽप्रत्ययपदस्याण्ग्रहणस्य चानुवृत्तत्वेन प्रकृते विधीयमानाकाररूपेऽनणि तपरसूत्राप्रवृत्त्या नानुनासिकत्वमिति वाच्यम् ? तपरसूत्रेऽप्रत्ययग्रहणानुवृत्तावण्ग्रहणानुवृत्तौ च मानाभावादिति चेन्न, 'आ आत्' इति प्रश्लेषेण विधाय तयोश्च परस्परं विशेष्यविशेषणभावेन एकस्मिन्नाकारे आदेशत्वपर्याप्तेरपरस्मिंश्चादेशतावच्छेदकत्वपर्याप्तेरङ्गीकारेणानेकाल्त्वाप्राप्त्या शुद्धाया एवाकारव्यक्तेर्विधानलाभेनादोषात् । नचैवं नकारस्यानुनासिकस्यान्तरतम्यादनुनासिक एव स्यात् प्रश्लेषे तु सर्वाकार एव इत्येव प्रश्लेषफलं कथं न स्यादिति वाच्यम् ? 'अनुनासिकविधाने प्रतिपत्तिलाघवाय तस्यैवोच्चारणे कर्तव्ये तदनुच्चारणात् शुद्धस्यैव विधानस्य 'अष्टन आविभक्ता'विति सूत्रे 'शुद्धोच्चारणसामर्थ्याद्भविष्यति इत्यादिभाष्येण लाभात् । अन्ये तु उक्तपूर्वपक्षोत्तरपक्षरूपसमाधानादिकं 'गुणा भेदका' इति पक्षा-

भिप्रायेण। वस्तुतस्तु भाष्यसंमते सिद्धान्तभूते 'गुणा अभेदका' इति पक्षे जाति पक्षे च प्राप्तस्य सवर्णग्रहणस्याप्रत्ययग्रहणेन निषेधेन दोषविरहात्। अत एव भाष्ये तपरस्तत्कालस्येति प्राप्नोति' इत्युक्तम्। अप्रत्यय इत्यस्य च वाक्यभेदेन सर्व स्यैव प्रतिषेधकत्वेन अण्ग्रहणस्य तत्रासम्बन्धेन न कोऽपि दोष इति भाष्याशयः। अत एव भाष्ये 'भाष्यमानेन सवर्णानां ग्रहणं ने'त्येवोक्तं न तु अणेति। तदाशये नैव 'अणुदित्सूत्रे' अनया परिभाषयाऽप्रत्ययग्रहणवैयर्थ्यमाशङ्क्य अप्रत्ययग्रहणस्य तत्परिभाषाज्ञापकत्वमुक्तम्। एतेन च तस्या व्यापकत्वं सूचितम्। अप्रत्ययग्रहण स्योक्तरीत्या व्याख्यानञ्च सूचितम्। तथा च जातिग्रहणप्राप्तस्य गुणाभेदकत्वपक्ष प्राप्तस्य चानया अणनण्साधारण्येन निषेधः क्रियते इति फलितम्। इदन्तु तत्त्वम् 'अणुदित्सूत्रस्थाप्रत्ययग्रहणज्ञापकत्वपरभाष्यस्य स्थालीपुलाकन्यायेन परिभाषा बोध्यते इत्याशयो बोध्यः।

**७४ प्र०—प्रियाष्टन् शब्दविषये प्राचीनमतमुपपाद्य तत्र नवीनाभिप्रायः पूर्णं वर्णनीयः।**

उ०—'अष्टाभ्य औशि'ति जश्शसोरौशादेशविधौ कृतात्वनिर्देशाज्ज्ञाप्यमानमात्वमष्टन्शब्दस्य प्राधान्ये सत्येव भवति, न तूपसर्जनत्वेऽपि, 'अष्टाभ्य' इति बहुवचननिर्देशात्।

एवञ्च 'अष्टन आ विभक्तौ' इत्यत्र 'अष्टन' इत्येकवचननिर्देशेनाष्टन्शब्दस्य प्राधान्याश्रयणे मानाभावाद्धलादावेव वैकल्पिकमात्वमिति सिद्धान्तः। तथा च प्रियाष्टन्शब्दस्याजादिषु विभक्तिषु राजवदेव रूपम्। हलादिषु विभक्तिषु तु हाहाशब्दवद्राजवच्च रूपमिति प्राचीनाः।

**नवीनास्तु**—'ष्णान्ता' इति सूत्रे भाष्ये 'अष्टानाम्' इत्येतत्सिद्धये 'अष्टन आ विभक्तौ' इत्यत्र हलीत्यपकर्षमुक्त्वा तत्र पक्षे 'प्रियाष्टौ प्रियाष्टा' इति न सिद्ध्यति, 'प्रियाष्टानौ प्रियाष्टान' इत्येव प्राप्नोति, इति शङ्किते 'यथालक्षणमप्रयुक्ते' इति समाहितम्।

तत्र यथालक्षणमिति प्रतीकमादाय 'लक्षणमनतिक्रम्य यथालक्षणमिति यथार्थेऽव्ययीभावेन यस्य लक्ष्यस्य क्वचिदपि प्रयोगो नोपलभ्यते तत्र लक्षणमनतिक्रम्य कार्यं कर्त्तव्यं तदत्र मा भूदात्वमित्यर्थः' इत्येकमर्थमुक्त्वा—यद्वा 'लक्षणस्याभावोऽलक्षणम्' इत्यर्थाभावेऽव्ययीभावं कृत्वा 'पुनर्यथार्थेऽव्ययीभावेन—अप्रयुक्तलक्ष्ये लक्षणप्रवृत्त्यभावस्य योग्यता—अप्रयुक्तलक्ष्ये किञ्चिदपि लक्षणं नैव प्रवर्त्तते' इति कैयटेन

व्याख्यान्तरमुक्तम् । तत्राप्रयुक्ते लक्षणाभावस्य योग्यतेत्यर्थस्य पदशक्तिमर्यादया लाभेनान्त्यव्याख्यैव युक्ता ।

आद्यव्याख्यायामप्रयुक्ते इति वाक्यशेषस्यासङ्गत्यापत्तिः, प्रयुक्तेऽपि लक्षणानतिक्रमणात् । एवञ्चैषामनभिधानमेवोचितम् । अत एव 'अष्टाभ्य औशि'ति सूत्रे भाष्ये 'अष्टन आत्वमिह वैकल्पिकं यदयमात्वभूतस्य ग्रहणं करोति 'अष्टाभ्य इति, अन्यथा 'अष्टन इत्येव ब्रूयात्' इत्युक्तम् । प्रियाष्टन्शब्दस्य लोके प्रयोगसत्त्वे तु तत्र गौणे औशादेशप्रवृत्त्यभावाय बहुवचननिर्देशस्यावश्यकत्वात्तदसङ्गतिः स्पष्टैव । तस्मात्प्रियाष्टन्शब्दप्रयोगविचारः सर्वोऽपि निरर्थक एवेत्याहुरिति दिक् ।

**७५ प्र०—अष्टानामित्यत्र प्राचीनविचारसरणिं सयुक्तिकं दूषयित्वा अर्वाचीनविचारचातुरीं समुदञ्चयत ।**

उ०—ननु 'अष्टाना'मित्यत्र परत्वान्नित्यत्वाच्च प्रथममात्वे कृते सति नान्तत्वाभावेन षट्त्वाभावान्नुट् न स्यादिति चेन्न, 'अष्टन आ विभक्तौ इति सूत्रे हल्पदापकर्षस्य सत्त्वेन तत्सामर्थ्यात् नुट्शास्त्रस्य पूर्वमेव प्रवृत्तेरङ्गीकारेण तदनन्तरमात्वस्यापि सूपपादत्वेन दोषाभावात् । यत्तु सन्निपातपरिभाषयाऽत्र नात्त्वं, किन्तु नुटि 'नोपधाया' इति दीर्घे नलोपे चोक्तरूपसिद्धिः । नचैवमात्वाभावे 'अष्टनो दीर्घात्' इत्यस्याप्राप्तौ विभक्त्युदात्तत्वं न स्यादिति वाच्यम् । 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेनैवान्तोदात्तत्वस्य सिद्धत्वात् । नचास्मिन् पक्षेऽपि सन्निपातपरिभाषया नलोपो न स्यादिति वाच्यम् ? नलोपस्यासिद्धत्वेन सन्निपातविघाताभावेन परिभाषाया अप्रवृत्तेरित्याहुस्तन्न, पूर्वत्र कर्तव्ये नलोपस्यासिद्धत्वेऽपि तस्मिन् कृतेऽसिद्धत्वे मानाभावात् । शास्त्रासिद्धत्वपक्षस्यैव सिद्धान्तसम्मतत्वेन शास्त्रीयकार्ये एवासिद्धत्वस्यौचित्येन सन्निपातस्याशास्त्रीयत्वेन तस्य नलोपासिद्धत्वेनालाभाच्च । आरोपिता सिद्धत्वेऽपि वस्तुतो नलोपे तद्विघातस्य जायमानतया नलोपेऽपि सन्निपातपरिभाषाप्रवृत्तेर्दुर्वारत्वाच्च । अत एव 'गव्यिता' 'नाव्यिता' इत्यादौ सन्निपातपरिभाषया यलोपो न भवति, इतरथा 'यस्य हल' इति यलोपस्य बहिर्भूततृजनिमित्तकत्वेन बहिरङ्गतयाऽन्तरङ्गावादेशम्प्रति असिद्धतया निमित्तविघाताभावेन परिभाषा एवाप्रवृत्त्यापत्तिः । तस्मात् नलोपस्यापि परिभाषाऽनित्यत्वेनैव साध्यतया नलोपस्यासिद्धत्वात् परिभाषाऽनित्यत्वेनात्वमेव युक्तं न तु दीर्घनलोपौ । किञ्च षट्संज्ञासन्निपातेन जातस्य नुट आत्वे नलोपे वा न तद्विघातकत्वम् , स्थानिवद्भावेन कृतात्वे नलोपे वा षट्त्वसत्त्वात् । नचोक्तरीत्या कृतात्वेऽपि षट्त्वमाश्रीयते चेत् तदा

हलपकर्षो व्यर्थ इति वाच्यम् ? कार्यकालपक्षे तत्तद्विध्येकवाक्यतापन्नषट्त्वस्य बहिरङ्गतयाऽऽत्वे कृतेऽनान्तत्वेन षट्त्वाभावान्नुट् न स्यादतः हलपकर्षस्यावश्यकत्वात्। हलपकर्षेण व्याख्यानापेक्षया दीर्घग्रहणात् ज्ञापकात् आकारान्तस्य षट्संज्ञाश्रयणे, अत्र यथोद्देशस्यैवाश्रयणेनान्तरङ्गतया पूर्वं षट्त्वे नान्तसंख्यावाचकत्वसमानाधिकरणधर्मविशेषरूपस्य षट्त्वस्य स्थान्यल्धर्मत्वाभावेन स्थानिवद्भावादाकारान्ते आश्रयणे वा स्पष्टमेव ज्ञानगौरवमिति भावः।

**७६ प्र०—'शेषे लोप' इत्यत्रान्त्यलोपटिलोपपक्षौ सप्रमाणमुपपाद्य तत्र ग्रन्थकृतः—कतरः पक्षोऽभिमत इति निरुच्यताम्।**

**उ०**—'शेषे लोप' इत्यत्र 'शेषे' इत्यस्य विभक्तावन्वयेन अलोऽन्त्यपरिभाषयाऽन्त्यलोपपक्ष एवोपपादितो भवति। तत्र प्रमाणं हि 'साम आकम्' इत्यत्र ससुट्कनिर्देश एव। अन्यथा सुटोऽप्राप्तेस्तदसङ्गतिः स्यात्।

'शेषे' इति षष्ठ्यर्थे सप्तम्याः शेषस्य स्थान इत्यर्थे तु टिलोपपक्षः साधितो भवति। अत्र प्रमाणन्तु-लुप्ते यः शिष्टस्तस्मिन् कार्यस्य-टावभावस्य तस्य = शेप इत्यस्य फलमाहुरित्यर्थकं 'टिलोपष्टावभावार्थः शेषे लोप इति स्मृतः। लुप्तशिष्टे हि तस्याहुः कार्यसिद्धिम्मनीषिणः' इति भाष्यमेव।

**ग्रन्थकृतस्तु**—टिलोपपक्षो व्यर्थः। अत एव 'लिङ्गाभावाट्टिलोपवचनानर्थक्य'मिति 'साम आकम्' इत्यत्र भाष्ये उक्तम्। 'नेतराच्छन्दसि' इति सूत्रभाष्ये 'शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति वार्त्तिकेन लिङ्गवत्त्वे तु 'लिङ्गाभावात्' इति भाष्योक्तिः सन्निपातपरिभाषया उपलक्षणम्। एवञ्च तथैव टावभावोपपत्तौ टिलोपस्य न किमपि फलमिति सूचितम्।

न च 'टिलोपष्टावभावार्थ' इति 'त्यदादीनाम' इति सूत्रस्थं भाष्यं विरुद्ध्येतेति वाच्यम्' सन्निपातपरिभाषासिद्धफलदानेन तस्य भाष्यस्यैकदेश्युक्तित्वात्।

न च 'भ्यसो भ्य'मिति सूत्रस्थं 'यदि भ्यमादेशः शेषे लोपोऽन्त्यलोप इत्येतं प्राप्नोति। अथाभ्यमादेशः शेषेलोपष्टिलोप इत्यन्तस्योदात्तनिवृत्तिस्वरः प्राप्नोतीति' यथेच्छसि तथाऽस्तु' इत्युभयपक्षस्य व्यवस्थितत्वाश्रयणपरं भाष्यं विरुद्ध्येतेति वाच्यम्' 'त्वं यथेच्छसि तथाऽस्तु' तत्र दोषोद्धारो मया सुकर' इति तात्पर्येण 'यथेच्छसि तथाऽस्तु' इति प्रौढोक्त्या भ्यमितिच्छेदस्य तेनैव प्रौढिवादत्वसूचनात्। न च 'न यासयो'रिति निर्देशात् 'टाब्विषये सन्निपातपरिभाषा न' इति कल्पनेन न 'त्यदादीनाम' इति सूत्रस्थभाष्यफलसिद्धिरिति चेन्न' 'वृद्धौ' इत्यत्र सन्निपातपरि-

भाषया टाविभावोपपादनपरेण 'कृन्मेजन्त' इति सूत्रभाष्येण 'न चादेशो हलादिरस्ती' ति 'युष्मदस्मदोरनादेशे' इति सूत्रभाष्येण च तन्निर्देशस्यानित्यत्वमात्रपरकत्वसम्भवेन 'टाविषये' इति नियमस्य वक्तुमशक्यत्वादित्याहुरिति दिक्।

**७७ प्र०—मपर्यन्तस्येत्यत्र परिग्रहणस्य प्रयोजनं प्राङ्नव्यमत-भेदेन प्रतिपाद्य तत्र युक्तायुक्तत्वे विवेचनीये।**

उ०—मपर्यन्तस्येत्यत्र परिग्रहणाभावे 'सम्भवति सामानाधिकरण्ये वैयधिक-रण्यस्यान्याय्यत्व'मिति रीत्या सामानाधिकरण्येनान्वये युष्मयत्यादेः क्विपि सुपि 'युष्म् अम्' 'अस्म् अम्'–इत्यादौ मान्ते यत्र युष्मदस्मदी तत्रैवादेशा भविष्यन्ति न दान्तयोः। परिग्रहणे कृते तु परिशब्दोपादानसामर्थ्याद्युष्मदस्मदोर्यौ मपर्यन्ता-विति वैयधिकरण्येनान्वयाद्दान्ते व्यपदेशिवद्भावेन युष्मयत्यादेः क्विपि चादेशाः सिद्ध्यन्ति। 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधस्तु प्रकृते न भवति, तस्य प्रत्ययविधिविषयत्वादिति **प्राचीनाः**।

यद्यग्रिमभागाभावेऽपि पर्यन्तशब्दप्रयोगस्तदा परिशब्दसत्त्वेऽपि सम्भवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्सामानाधिकरण्येनैवान्वयप्राप्तौ तत्प्रति-बन्धाय मणिमन्त्रन्यायावलम्बनेऽरुचिम्, 'अवधिद्योतनार्थं परिग्रहण'मिति भाष्य-विसंवादञ्च तन्मते दर्शयन्तो **नवीनास्तु**—

युष्मयत्यादेः क्विपि सुप्यादेशाभावार्थं परिग्रहणम्। परिग्रहणेन हि–'कटिपर्यन्तं वास' इत्युक्तेऽग्रे किञ्चिदस्तीति नियमेन प्रतीतेर्मान्ताद्यत्राग्रे किञ्चिदवशिष्टं तत्रैव युष्मदस्मदोरादेशा इत्यर्थेन दान्तयोरेवादेशा भवन्ति न तु मान्तयोः।

अत एव भाष्ये 'अवधिद्योतनार्थं परिग्रहणं कर्त्तव्यम्' मान्तस्येत्युच्यमाने यत्रैव मान्ते युष्मदस्मदी तत्रैवादेशाः स्युः। तत्रैवेत्यस्य 'अनिष्ट एव' इत्यर्थः। तदुत्तरं क्व च मान्ते ? युष्मयतेरस्मयतेश्चाप्रत्यये' इत्युक्तम्॥ एवञ्चैतेन भाष्येण मान्ते आदे-शानामनिष्टत्वमेव सूचितम्।

परिग्रहणाभावे तु 'यतः पूर्वोऽस्ति परश्च नास्ति सोऽन्त्य' इति भाष्योक्तेर्मान्त-पदस्य मुख्यार्थत्वलाभाय युष्मयत्यादिविषय एवादेशा भविष्यन्ति, न तु दान्तविषये।

न च णिलोपस्य 'अचः परस्मिन्' इति स्थानिवद्भावेन नायं दोष इति वाच्यम्, 'क्वौ लुप्तं न स्थानिव'दिति तन्निषेधात्। न च तावताप्यभिव्यक्तेति न्यायेन नायं दोष इति वाच्यम्, तस्य पदकार्यविषयकत्वात्प्रकृतेऽप्रवृत्तेरित्याहुः।

**वस्तुतस्तु**—पर्यन्तशब्दस्य यतोऽग्रे किञ्चिदवशिष्यते तत्र शक्तिरित्यस्य

केनाप्यवोधनेन नवीनानामपि पर्यन्तशब्दस्थ–'परी' त्यस्य तथाविधार्थेऽन्तपदशक्तेर्मणिमन्त्रादिन्यायेन नियामकत्वं वाच्यम्। किञ्च तथाविधार्थोपपत्तावपि वैयधिकरण्येनैवान्वयस्याभ्युपेयत्वेन लाघवात्तत्सामर्थ्येन प्राचीनोक्तार्थकल्पनमेव ज्यायः। 'अवधिद्योतनार्थ'मिति भाष्यविसंवादस्तु–'तत्रैवे'त्यक्षरास्वारस्यतुल्यः।

प्राचीनोक्तार्थस्य युक्तत्वादेव 'क्वौ लुप्त'मित्यस्य प्रवृत्तिफलत्वेन युष्मयतेः क्विपि निष्पन्नस्य–युष्मशब्दस्य 'त्व' मित्यादिरूपं कैयटेनोक्तम्। एवं सति–अन्तग्रहणसामर्थ्याद्वैयधिकरण्येनान्वयलाभे परिग्रहणस्य वैयर्थ्यन्तु नाशङ्कनीयम्, अन्तग्रहणाभावे मकारस्यैव निर्दिश्यमानत्वेन मकारस्यैव त्वाद्यादेशापत्तेरिति दिक्।

**७८ प्र०—'यूयम्' 'वय'मित्यादिविषये जशः श्यादेशवारणोपायः प्राङ्नव्यमतभेदेन प्रतिपाद्य तत्र युक्तायुक्तत्वे विचारणीये।**

**उ०**—'यूयम्' 'वय' मित्यादौ 'शेषे लोपोऽन्त्यलोप' इति पक्षे दकारस्य लोपेऽवर्णान्तात्सर्वनाम्नः परत्वाज्जशः शीभावः प्राप्तो न भवति, 'अङ्गाधिकारविहिते कार्ये सति पुनरङ्गाधिकारविहितं कार्यं न भवती' त्यर्थिकया 'ज्ञाजनोर्जा' इति सूत्रज्ञापितया 'अङ्गवृत्ते पुनर्वृत्तावविधि' रिति परिभाषया निषेधात्।

न च 'अङ्गवृत्ते पुनर्वृत्तावविधि' रिति परिभाषास्वारस्येन 'अङ्गकार्य' इत्यस्य—अङ्गाधिकरणककार्य एव प्रवृत्त्या न तया श्यादेशवारणमिति वाच्यम्, एवमपि 'शसो नं' त्यनेन संहितया पाठे 'ङे प्रथमयो' रित्यत्र मकारान्तरं प्रश्लिष्य 'अम् मान्त एवावशिष्यते न तु विक्रियत' इति व्याख्यानेन तद्वारणसम्भवादिति प्राचीनाः।

**नवीनास्तु**—आत्वयत्वनिमित्तेतरात्मकशेषविभक्तिभूताऽमादि–युष्मदादि–सन्निपातेन जातस्य दलोपस्य तद्विघातकश्यादिनिमित्तत्वं नेति सन्निपातपरिभाषयैव श्यादेशवारणसम्भवे प्रश्लेपो नोचितः। न च सन्निपातपरिभाषाप्रवृत्तिस्वीकारे ससुट्क निर्देशस्य वैयर्थ्यापत्तिरिति वाच्यम्।

आगमस्यागमिसम्बन्धिसन्निपातविघातकत्वाभावेन तदापत्तिविरहात्। अत एव 'ह्रस्वत्वं तुग्विधेर्ग्रामणि कुल'मिति सन्निपातपरिभाषाप्रयोजनव्याख्यावसरे–'यदा ह्रस्वमात्रस्य तुगागमो' न तदन्तस्य 'तदेदं प्रयोजन'मिति तदन्तस्य तुगागमे सन्निपातपरिभाषाविरोधमुद्भाव्य कैयटेन व्याख्यातम्। आगमस्याप्यागमिसम्बन्धिविघातकत्वे तु ह्रस्वमात्रस्य तुगागमेऽपि परिभाषाविरोधापत्त्या कैयटग्रन्थोऽसङ्गतः स्यात्।

मकारान्तरप्रश्लेषस्तु भाष्येऽदर्शनादुपेक्ष्यः । अत एव 'नेतराच्छन्दसी'ति सूत्रे भाष्ये–'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेने'ति वार्त्तिकं व्याख्याय–'तेषु कृतेषु पुनः प्रसङ्गाच्छिशीलुग्विधयः कस्मान्न भवन्ति ?' 'सकृद्गतिन्याया'दित्युक्तम् ।

मकारान्तरं प्रश्लिष्य श्यादेशवारणे तु तत एव पुनः प्रसङ्गस्यैवाभावेन भाष्यासङ्गतिः स्पष्टैव । अत एव 'यूयम्' इत्यादिप्रयोगो भाष्यकृता कृतः । किन्तु श्यादिशङ्कासमाधानं न कृतम्, तावतैवात्र सन्निपातपरिभाषाविषयत्वं सूचितं तेनेति ज्ञायते । अङ्गवृत्तपरिभाषया वारणमपि प्राचीनानां नोचितम् । तस्या अङ्गसम्बन्धिकार्यमात्रविषयत्वात् 'द्वयो'रित्यादिनिर्देशासङ्गतेस्तस्या लक्ष्यसंस्कारकत्वायोगाच्चेत्याहुः ।

**वस्तुतस्तु**—'नेतराच्छन्दसी'ति सूत्रे 'नपुंसकादेशेभ्यो युष्मदस्मदोर्विभक्त्यादेशा विप्रतिषेधेन' इति वार्त्तिकं व्याख्याय 'तेषु कृतेषु पुनःप्रसङ्गविज्ञानाच्छिशीलुङ्नुम्विधयः कस्मान्न भवन्तीति यदुक्तं तत्तु मकारप्रश्लेषानवगमादङ्गवृत्तपरिभाषायाः प्रत्याख्यानाच्च सकृद्गतिन्यायेन समाहितमिति न तत्प्राचीनानां प्रतिकूलम् । नव्यमतेऽपि सन्निपातपरिभाषानवगमेनैव तथा भाष्ये व्याख्यातमित्यवश्यं कल्पनीयम्, अन्यथा तयैव निर्वाहे सकृद्गतिन्यायाश्रयणं विफलमेव स्यात् । लोकप्रसिद्धसन्निपातपरिभाषयैव निर्वाहे मकारप्रश्लेषो गौरवग्रस्त इत्यपि नासादनीयम्, 'ते प्राग्धातो'रित्यादिनिर्देशैः'जसःशी'ति सूत्रविधेये सन्निपातपरिभाषाप्रयुक्तसङ्कोचाभावस्य ज्ञापनेन तस्या अत्राप्रवृत्तेः । न च विधेये सङ्कोचो नाङ्गीकार्यः, किन्त्वनुज्ञावाक्य एव, एवञ्च 'ते' इति निर्देशेन 'त्यदादीनाम' इत्यस्यानुज्ञावाक्ये 'जसःशी'त्येतदतिरिक्तत्वेन सङ्कोचेऽपि 'प्रकृते सङ्कोचे मानाभाव इति वाच्यम्, 'उपजीव्यविरोधो न न्याय्य' इत्यक्षरस्वारस्यभङ्गापत्तेः । नहि तेन न्यायेनोपजीव्यविरोधानुज्ञादानं पापजनकमिति बोध्यते, अपि तूपजीव्यविरोधस्य पापजनकत्वमुच्यते । एवञ्च प्राचीनमतमेव समीचीनमिति चिन्तनीयमवहितचेतोभिरिति दिक् ।

**७१ प्र०—'साम आक'मिति सूत्रोदाहरणभूतयो 'र्युष्माकम्' अस्माकमि'त्यनयोः सुड्वारणोपायम्प्रदर्श्य 'अतित्वाक'मिति भाष्यप्रयोगे आकमादेशविधानेन सुडापत्तिर्वार्यताम् ।**

उ०—युष्मद् आम्, अस्मद् आमिति स्थितेऽवर्णात्परत्वाभावात्सुटोऽप्रसक्तेः, 'शेषे लोप' इति लोपे कृतेऽवर्णात्परत्वसम्भवेऽप्याकमादेशात्प्रागनादेशतया शेषे लोपस्यैवाऽप्राप्तेश्च 'साम आक' मित्यत्र ससुट्कनिर्देशो व्यर्थः सन् आकमि शेषे लोपे कृते प्राप्तः सुट् न भवतीति बोधयति।

**अयं भावः**—शब्दानित्यत्वप्रसङ्गभङ्गाय यथा 'अस्तेर्भूः' इत्यनेन–अस्बुद्धि-प्रसङ्गे भूबुद्धिः कर्त्तव्येति प्रसक्तबुद्धिरेव निवार्यते, तथा 'साम आक'मित्यनेनापि साम इत्येतद्बुद्धावाकम्बुद्धिः कर्त्तव्येत्येव बोध्यते, प्रकृते साम्प्रतिकस्य सकारबुद्धि-प्रसङ्गस्यासम्भवाद् भाविनो ग्रहणं सकारोच्चारणसामर्थ्यात्। एवञ्च साम्प्रतिकी–आम्बुद्धिः भाविनी च सकारबुद्धिः, या प्रसक्ता तयोराकम्बुद्धिः कर्त्तव्येति प्रकृत-सूत्रेण बोधिते–यद्धर्मावच्छिन्नविषयकबुद्धिप्रसङ्गे आदेशबुद्धिः कर्त्तव्यत्वेन शास्त्रेण बोध्यते, कृते–आदेशे तस्मिन् स्थानिवद्भावेन तद्धर्मावच्छिन्नबुद्धिरेव भवतीति प्रकृते–आकमादेशे कृते साम्त्वबुद्धिरेव भवति न त्वाम्त्वबुद्धिरित्युद्देश्यतावच्छेदका-वच्छिन्नाभावात् न 'युष्माकम्, अस्माक'मित्यादौ सुटः प्रसक्तिरिति।

साम्त्वावच्छिन्नबुद्ध्यैवादेशप्रवृत्त्यङ्गीकारादेव–आदेशस्याकम आम्त्वाभावात् 'अतित्वाक'मित्यादौ नुडभावः सिद्ध्यति। नचातित्वाकमित्यत्राकमेव दुर्लभः, गौणे सामः प्रसङ्गाभावादिति वाच्यम्, आम्येव साम्त्वस्याऽऽहार्य्यारोपेणाकमादेशस्योप-पादयितुं शक्यत्वात्।

आहार्य्यारोपे निमित्तन्तु–साम्त्वसम्भावनागमकसुख्यार्थयुष्मदस्मद्घटितसमुदा-यसंख्यासमर्पकत्वमेवेत्यवसेयमिति दिक्।

**८० प्र०—साम आकम्। सामः प्रसङ्गे आकम्। 'सकारबुद्धि-प्रसक्तेश्च साम्प्रतिकया असम्भवाद् भाविन्या ग्रहण'मिति शेखरकृत्। अत्रेदं पृच्छ्यते–अतित्वाकमित्यत्र भाविन्या अपि तद्बुद्धेरसम्भवा-दाकमनुपपत्तेः कथमेतद्ग्रन्थसङ्गतिः? इति सुस्पष्टं निरुच्य 'भपर्य-न्तस्ये'ति सूत्रे परिग्रहणस्य प्रयोजनं प्रतिपादनीयम्।**

उ०—एतदुत्तरन्तु पूर्वतो द्रष्टव्यम्।



# अथ हलन्तनपुंसकलिङ्गप्रकरणम् ॥ ११ ॥

**८१ प्र०—सूत्रे 'एनदादेशविधानेनैव-एनत्, एनमित्यादिरूपसिद्धौ तदुभयादेशविधानवैफल्यं शेखरोक्तदिशा निराकरणीयम् ।**

उ०—ननु 'द्वितीयाटौस्स्वेन' दित्येव सूत्र्यताम्, नपुंसकेऽमो लुकि-एनदिति सिद्ध्यति, एनमित्यादि तु त्यदाद्यत्वेन सेत्स्यतीति सूत्रे-एनादेशस्य-तदितरत्रैनदादेशस्य च विधाने न किमपि फलमिति चेन्न, 'येननाप्राप्ति' न्यायेनैनतस्त्यदाद्यत्वापवादत्वेनैनदादेशे विहिते त्यदाद्यत्वाद्यप्राप्त्या-एनादेशाभावे 'एन'मितिरूपासिद्धेः। अत्र प्रमाणन्तु-'नपुंसकैकवचने एनद्वक्तव्यः, कुण्डमानय प्रक्षालयैनदि'ति भाष्यमेव। तथा हि-तत्र-'नपुंसकैकवचने' इत्युक्त्याऽन्यत्रैनो वक्तव्य इति स्पष्टमेवोक्तं भवति।

न च त्यदाद्यत्वस्यैनदादेशो यद्यपवादस्तदा भाष्ये 'यद्येनत्क्रियते-एनो न वक्तव्यस्त्यदाद्यत्वेन सिद्ध'मिति भाष्यं विरुद्ध्येतेति वाच्यम्, यदि गर्भवाक्ये पूर्वपक्ष्युक्तित्वस्यैवौचित्येन तस्य भाष्यस्यैकदेशश्युक्तित्वात्। न च तथापि सा सिद्धान्त्युक्तिस्तत्प्रत्याख्यानपरा कुतो नेति वाच्यम्' सिद्धान्तिना 'किमुच्यते ?-नपुंसकैकवचने इति, सर्वत्रैनदेव वक्तव्य' इत्येवं शब्दैस्तत्प्रत्याख्यानस्य विहितत्वात्।

न चोपसर्जने-एनदादेशस्य चारितार्थेन त्यदाद्यत्वापवादत्वोक्तिर्विरुद्धेति वाच्यम्, 'एतदस्त्रतसो'रित्येतत्साहचर्येण 'त्यदाद्यत्वेन सिद्ध'मिति भाष्येण चैनैनतोरुपसर्जनेऽप्रवृत्तेरिति दिक्।



# अथ अव्ययप्रकरणम् ॥ १२ ॥

**८२ प्र०—'तद्धितश्चासर्वविभक्ति'रिति सूत्रार्थं प्रदर्श्य तत्राऽसर्वविभक्तित्वानुपपत्तिरुपपाद्य समाधीयताम् ।**

उ०—यद्यपि सर्वशब्दः प्रकारकात्स्न्र्येऽस्ति, यथा सर्वान्नीनो भिक्षुरिति' सर्वप्रकारकान्नभक्षक इत्यर्थः। तथापि तस्येह न ग्रहणम्, सूत्रार्थस्यासम्भवदुक्तिकतापत्तेः, नहि सर्वा विभक्तयस्तत उत्पद्यन्ते, किन्त्ववयवकात्स्न्र्यार्थकस्यैव सर्वशब्दस्य प्रकृते ग्रहणम्, सर्वः पटो दग्ध' इतिवत्। एवञ्च 'यस्मात्सर्वावयविका (वचनत्रयात्मिका) विभक्तिर्नोत्पद्यते-किन्त्वेकवचनान्येवोत्पद्यन्ते स तद्धितान्तोऽव्ययं स्यादिति सूत्रार्थः।

ननु 'संख्याकारकबोधकैरेकवाक्यतया 'सुपां विधान'मिति पक्षे अव्ययार्थे संख्याकारकयोरभावाद्विभक्तिर्नोत्पत्स्यते '

न च 'अव्ययादाप्सुप' इति ज्ञापकाद्विभक्त्युत्पत्तिर्भविष्यतीति वाच्यम्, एवमपि सर्वासां विभक्तीनामुत्पत्त्याऽसर्वविभक्तित्वानुपपत्तेः। ननु 'ङ्याप्प्रातिपदिकात्' इत्यनेन सर्वेष्वर्थेषु-विधेयतया प्रधानप्रत्ययानुरोधेन गुणभूतप्रकृतेरावृत्त्या सर्वविभक्त्युत्पत्तावनन्तरं 'कर्मणि द्वितीये'त्यादिना कर्मणि द्वितीयैवेति नियमेनेतरविभक्तेर्लोपेनैव निवृत्त्या कल्पितगुणानां निवृत्तिरित्येवं विहितानां नियमपक्षे तदुपपद्येत इति चेत्-**अत्रोच्यते—**

नियमो द्विविधः-अर्थनियमः, प्रत्ययनियमो वा। प्रत्ययनियमोऽपि द्विविधः-प्रकृतार्थापेक्षः, सामान्यापेक्षो वा, तत्र 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेत्कर्मणि विभक्तिस्तदा द्वितीयैव' 'कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवे'ति 'यत्रैवकारस्ततोऽन्यत्र नियम' इति सिद्धान्तादर्थनियमपक्षे विभक्तीनामनियतत्वादव्ययेभ्यः सर्वा विभक्तयः प्राप्नुवन्ति। 'कर्माद्यर्थयोग्यप्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव' न करणादौ' 'कर्मादियोग्यतद्रहितप्रातिपदिकार्थ एव प्रथमा, न कर्मादौ, 'संख्यावदर्थयोग्यप्रातिपदिकादेकत्वादावेकवचनादि, न द्वित्वादा' वित्यादिप्रकृतार्थापेक्षप्रत्ययनियमपक्षेऽप्यव्ययेभ्यः सर्वा विभक्तयो लभ्यन्ते।

'प्रातिपदिकाच्चेद्द्वितीया तदा कर्मण्येव' नान्यत्र, (न तु तदभावे) 'प्रातिपदिकाच्चेत्प्रथमा तदा-मात्रग्रहणात्पर्युदासन्यायेन—कर्मादियोग्यतद्रहितप्रातिपदिकार्थ एवे'त्यादिसामान्यापेक्षप्रत्ययनियमपक्षे तु विभक्तिप्राप्तिरेव नाव्ययेभ्य इति। एवञ्च-अर्थनियमे, प्रकृतार्थापेक्षप्रत्ययनियमे नाव्ययेभ्यः सप्तानामपि विभक्तीनां प्राप्त्या-सामान्यापेक्षप्रत्ययनियमे च सुपोऽप्राप्त्या चासर्वविभक्तित्वानुपपत्तिरेवेति **चेदत्रोच्यते—**

तथाहि—'तद्धितश्चे'ति प्रकृतसूत्रे भाष्ये तावत्—'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मिति सूत्रन्यासं भङ्क्त्वा 'एकवचनम्' 'द्वयोर्द्विवचनम्' 'बहुषु बहुवचन'मिति सूत्रन्यासं कृत्वा एकवचनमुत्सर्गतः करिष्यते, द्विबह्वोरर्थयोस्तस्य द्विवचनबहुवचने बाधके-इत्यादि स्थितम्।

ततश्च 'एकवचन' मित्यनेन ङ्याप्प्रातिपदिकादेकवचनं भवतीति सामान्यविधिना द्वित्वबहुत्वाभावे-एकवचनमिति लभ्यते। एवञ्च द्विबहुत्वाभावे सत्येकत्वे तदभावे चैकवचनमिति फलति, तत्र द्वित्वबहुत्वयोर्द्विवचनबहुवचनोक्त्यैव ततोऽ-

न्यत्रैकवचनस्य सिद्धत्वात् 'एकवचनम्' इति सूत्रं कर्मत्वाद्यभावेऽपि प्रापणार्थं सम्पद्यते। तथा चालिङ्गसंख्येभ्योऽव्ययेभ्यः प्रवर्त्तमानमेकवचनं विनिगमनाविरहात् सर्वविभक्त्येकवचनं भवतीति।

न चैवं 'पचतिकल्प'मित्यादौ 'एकवचन'मिति सामान्यसूत्रेण सर्वैकवचनमुत्पत्स्यत इति वाच्यम्' सर्वथाऽप्राप्तावेव तेन विधानात्। प्रकृते तु कर्त्तृत्वकर्मत्वसत्त्वेन क्रियायां स्वत एकत्वनियमेन सर्वथा तदप्राप्त्यभावादिति दिक्।

**८३ प्र०—अव्ययसंज्ञायां तदन्तविधिसत्त्वे—'अत्युच्चैसौ, इत्यादौ 'अव्ययादाप्सुप' इति लुग्वारणोपाये विवदमानयोः प्राङ्नव्ययोर्मते साधु प्रतिपाद्य 'कृन्मेजन्त' इति सूत्रे 'मेजन्त' इति कृतो विशेषणं तदन्तस्य वेति निर्णीय 'आधये, कुम्भकारेभ्य, इत्यादावव्ययसंज्ञावारणोपायः सम्यक् प्रतिपाद्यताम्।**

**उ०—अयं भावः**-उपसर्जनेन व्यावृत्त्यर्थया 'अव्यय' इत्यन्वर्थसंज्ञयाऽव्ययसंज्ञायां शब्दस्य विशेष्यतया-'प्रयोजनं सर्वनामाव्ययसंज्ञाया'मिति तदन्तविधौ-अधिकरणत्वशक्तिप्रधानस्याप्युच्चैः शब्दस्य 'दोषामन्यमहः' इत्यादिवद्वृत्तिविषये शक्तिमत्प्रधानतया प्रक्रियादशायामुच्चैश्शब्दस्य द्वितीयान्तत्वेन 'अत्यादय' इति समासे 'अत्युच्चैसा'वित्यत्र समुदायस्याव्ययत्वेन 'अव्ययादाप्सुप' इत्यनेन लुगापत्तिर्न भवति। वृद्धिपदादादैच्समानाधिकरणवृद्धिपदवत्वेनेव-अव्ययपदाल्लिङ्गाद्यनन्वयितावच्छेदकसमानाधिकरणाव्ययपदवत्त्वेन वोध इत्यव्ययेति महासंज्ञाकरणात् लिङ्गाद्यनन्वय्यर्थानां गणेऽनुकरणस्यावश्यकत्वे तदितरानुकरणे प्रमाणाभावेन समुदायस्याव्ययत्वाभावात्, उच्चैरित्यस्याव्ययत्वेऽपि सुपस्ततो विहितत्वाभावाच्चेति **प्राचीनाः**।

**नवीनास्तु**—प्रधानाप्रधानन्यायेन सर्वनामसंज्ञासाहचर्येण च प्रसिद्धान्तरङ्गपदार्थानपेक्षानुपसर्जनीभूतस्यैवार्थस्य ग्रहणेन न समुदायस्य वृत्तिघटकस्य यथा 'राजपुरुष' इति समासावयवस्यैकार्थीभावबलाद्राजशब्दस्य राजसम्बन्धिपुरुषप्रतिपादकता, पुरुषशब्दस्य च राजसम्बन्धिपुरुष प्रतिपादकता, तथैव 'अत्युच्चैसौ' इत्यादौ 'उच्चैःशब्दस्याप्यूर्ध्वदेशाभिन्नाधिकरणकर्मकातिक्रमणप्रतिपादकतया—ऊर्ध्वदेशनिष्ठाधिकरणप्रतिपादककेवलप्रयुक्तोच्चैःशब्दापेक्षया बहिरङ्गत्वेन नाप्यव्ययस्य संज्ञेति, न लुगापत्तिशङ्कालेशोऽपि। एवञ्च विहितविशेषणाद्याश्रयणमपि निरर्थकमेवेत्याहुः।

ननु कृन्मेजन्त इति सूत्रे मेजन्त इति कृद्न्तस्यैव विशेषणमस्त्विति चेन्न,

प्रशाम् शब्दस्य श्रुत्या मान्तत्वेन प्रत्ययलक्षणात्कृदन्तत्वेन च प्रकृतसूत्रेणैवाव्ययत्वे सिद्धे स्वरादिगणे तत्पाठस्य वैयर्थ्यापत्तेः। न च कृद्विशेषणत्वेऽपि कारयाम् इत्यादौ सुपो लुङ् न स्यादिति वाच्यम्, 'आम' इति लुकि इष्टसिद्धेः।

ननु—'आधये' 'कुम्भकारेभ्य' इत्यादौ गुणे—एत्वे च कृते कृतो व्यपदेशिवद्भावेनैजन्तत्वादव्ययत्वापत्तिः, न च यथोद्देशे गुणादेर्बहिरङ्गत्वेनासिद्धत्वान्न दोष इति वाच्यम्; लुग्विधायकसूत्रैकवाक्यतया संज्ञाशास्त्रस्य कार्यकालपक्षे प्रवृत्त्यङ्गीकारात् संज्ञाकार्यस्य लुकः सुप्सम्बन्धित्वेनाव्ययसंज्ञाया अपि बहिरङ्गत्वेनोभयोः साम्यात्।

न च महासंज्ञाकरणेन लिङ्गाद्यनन्वयिन एवैषा संज्ञा प्रवर्त्तत इति 'आधये' 'कुम्भकारेभ्य' इत्यादेः कथमव्ययसंज्ञापत्तिरिति वाच्यम्। लिङ्गसंख्याद्यन्वयित्वेऽप्यव्ययीभावादेरिव प्रकृतेऽपि तत्प्राप्तेर्दुर्वारत्वादिति चेन्न, सन्निपातपरिभाषया बाधात्। न च सन्निपातपरिभाषया सन्निपातविघातकलुकोबाधेऽपि संज्ञामात्रेण सन्निपातविघाताभावात्तद्बाधे मानाभाव इति वाच्यम्, एज्विषयसन्निपातनिमित्तकं यदात्वं तदीयो यः सन्निपात एज्विषयत्वरूप एव तद्विघातकश्च 'क्ङिति चे'ति निषेधस्तस्य सन्निपातपरिभाषया निवृत्तावपि 'उपादास्त' इत्यत्र कित्त्वापत्तेः। एवञ्च कित्त्वसन्नियोगशिष्टत्वसिद्ध्या 'उपादिस्त' इत्यापद्येत। ननु किदिति कार्यातिदेशः, अतिदिश्यमानञ्च कार्यन्निषेधरूपमेव तस्य सन्निपातपरिभाषया निवृत्तौ तत्सन्नियोगशिष्टत्वमपि न भविष्यतीति चेन्न, यदीत्त्वभवनसमानकालिकभवनकर्तृकित्कार्यं किञ्चित्प्रसिद्धं स्यात्तदा कार्यातिदेशः स्यात्, प्रकृते तदभावेन किदिति व्यवहारातिदेशस्यैव सत्त्वात्। तस्मात्सन्निपातपरिभाषया सन्निपातविघातकशास्त्रस्यैव तत्तच्छास्त्रप्रवृत्तिनिमित्तातिदेशसंज्ञानामपि निवृत्तिरवश्यमङ्गीकार्या। साक्षात्परम्परया वा स्वसन्निपातविघातकस्य स्वयमनिमित्तमिति परिभाषार्थ इति दिक्।

## अथ स्त्रीप्रत्ययप्रकरणम् ॥ १३ ॥

**८४ प्र०—लिङ्गं शब्दनिष्ठमर्थनिष्ठं वेति सप्रमाणं विविच्य शब्दशास्त्रे स्त्र्यादिपदेन शास्त्रीयं स्त्रीत्वादिकं लौकिकं वा विवक्षितमिति सर्वानुपपत्तिपरिहारपुरस्सरं प्रतिपाद्य ब्रह्मात्मचितिशब्देषु नपुंसकत्वाद्युपपत्तिः प्रदर्शनीया।**

**उ०—अयं भावः**—लिङ्गमर्थनिष्ठमेव न तु शब्दनिष्ठम्, शब्दनिष्ठत्वे हि—

छागपदनिष्ठं छागमात्रपरिच्छेदकं स्यादेवञ्च छाग्यापि यागापत्तिः, किञ्च घटशब्द-निष्ठेन सर्वेषां घटानां परिच्छेदापत्तौ 'घटी'ति रूपानापत्तिः। अर्थनिष्ठत्वे तु तस्य यथाशब्दं परिच्छेदकत्वमिति—'पशुने'त्यत्र पुंस्त्वविवक्षयोच्चारणे तथैव परिच्छेद-कता, एवं—बुद्धिगतस्त्रीत्वस्य ज्ञानपदेन तद्विवक्षायां नपुंसकत्वेनैव यथाशब्दं परि-च्छेदकतेति न कोऽपि दोषः।

प्रकृते प्रमाणन्तु—'एकार्थे शब्दान्यत्वाद्दृष्टं लिङ्गान्यत्त्व'मिति 'स्त्रिया'मिति सूत्रस्थं 'नपुंसकादित्यनेनासन्दिग्धेनार्थग्रहणेन भवितव्यम्, नहि नपुंसकन्नामशब्दो-ऽस्ती'ति 'स्वमोर्नपुंसका'दिति सूत्रस्थं भाष्यमेवेति।

ननु स्तनकेशवत्त्वं स्त्रीत्वं, लोमवत्त्वं पुंस्त्वम्, उभयाभाववत्त्वे सति—अंश-तस्तदुभयवत्त्वं नपुंसकत्व, मित्येतादृशं लौकिकं स्त्रीत्वादिकं यदि शब्दशास्त्रे स्त्र्यादि-पदेन गृह्येत-तर्हि खट्वाद्यचेतनबोधकखट्वादिशब्दानामुक्तस्त्रीत्वादिबोधकत्वासम्भ-वेन 'खट्वा' 'घटान्' 'दधी'त्यादौ टाप् नत्वं सुब्लुक् च न स्यात्, यदि च सत्त्वादिगुणानामुपचयः पुंस्त्वमपचयः, स्त्रीत्वं तेषां स्थितिरूपं नपुंसकत्वमिति शास्त्रीयं विवक्षितमित्युच्येत तदा पुरुषादिशब्देभ्यः स्त्रीत्वनिमित्तकटावाद्यापत्तिः, रामशब्दादौ 'अतोऽमि'त्यमादेशापत्तिरिति चेदत्रोच्यते—अचेतनखट्वादिनिष्ठप्र-वृत्तिनिमित्तकशब्दानां सत्त्वादिगुणोपचयादिरूपं शास्त्रीयलिङ्गबोधकत्वमेव, चेतन-निष्ठप्रवृत्तिनिमित्तकपुरुषलक्ष्म्यादिशब्दानान्तु—पूर्वोक्तशास्त्रीयलिङ्गविशिष्टलौकिकस्त-नादिमत्त्वादिरूपलिङ्गबोधकमिति स्वीकरणीयम्।

दारादिशब्दादेश्च शास्त्रीयलिङ्गबोधकत्वमेव, तटादेश्च लिङ्गत्रयबोधकत्वं, कस्य-चित्तु लिङ्गद्वयबोधकत्वमित्यादौ कोशलोकव्यवहारावेव प्रमाणमित्यवगन्तव्यम्। एवञ्च शास्त्रघटकस्त्रीपुंनपुंसकशब्दानां शास्त्रीयतत्तल्लिङ्गबोधकत्वनिमित्तकटावादिकार्यसिद्धिः। चेतननिष्ठप्रवृत्तिनिमित्तकेषु च शब्देषु शास्त्रीयतत्तल्लिङ्गसहितलौकिकतत्तल्लिङ्गबोध-केषु शास्त्रीयतत्तल्लिङ्गबोधकत्वमादाय शास्त्रीयं कार्यमिति न काचिदापत्तिरिति ध्येयम्।

न च शास्त्रीयकार्याणां लौकिकलिङ्गबोधकत्वमेवास्तु, चेतनबोधकशब्दे शास्त्री-यलिङ्गबोधकत्वस्य नोपयोग इति वाच्यम्, 'दारानि'त्यादौ नत्वानापत्तेः। न चैक-स्मिन् पदार्थे युगपत्सत्त्वादिगुणानामुपचयापचयादेरसम्भवाद् 'वह्निर्देवता, वरुणो देवता, इत्यादौ युगपदेकपदार्थगतपुंस्त्वस्त्रीत्वबोधकवह्निदेवता—शब्दप्रयोगानुप-पत्तिरिति वाच्यम्, युगपत्त्रयाणां गुणानामुपचयापचयादेरसम्भवेऽपि—एकस्य गुण-स्योपचयेऽपरस्यापचयः सम्भवत्येवेति दोषाभावात्।

न च सत्त्वादीनां गुणतया तत्रोपचयापचययोर्महदणुपरिमाणस्वरूपयोरसम्भवः, गुणे गुणानङ्गीकारादिति वाच्यम्, सत्त्वरजस्तमसां द्रव्यस्वरूपत्वात्।

ननु ब्रह्मशब्दस्य नपुंसकत्वमात्मशब्दस्य पुंस्त्वं चितिशब्दस्य स्त्रीत्वं नोपपद्यते, सत्त्वादिगुणानां तत्राभावादिति चेन्न, 'परास्य' शक्तिर्विविधैव' 'आत्मनि चैवं विचित्राश्च ही'ति श्रुतिसूत्राभ्यामात्मनि पुंशक्त्यादिसत्त्वेन सर्वलिङ्गोपपत्तेः। सतामपि सर्वलिङ्गानां तत्तच्छब्दप्रतिपाद्यतावच्छेदेनैवाभिव्यक्तिरिति नातिप्रसङ्ग इति दिक्।

**८५ 'शूद्रा चामहत्पूर्वा जाति'रिति वार्त्तिकार्थं सपदकृत्यस्प्रदर्श्य सपदकृत्यं निर्दुष्टं जातिवाचकत्वं परिष्क्रियताम्।**

उ०—शूद्रशब्दाट्टाप् स्यात् स्वप्रवृत्तिनिमित्तभूता जातिश्चेद्वाच्या, महत्पूर्वकशूद्रशब्दष्टापं न लभते समुदायेन जातिश्चेद्वाच्येति वार्त्तिकार्थः। विधिवाक्ये-जातिरित्येतत्सम्बन्धात्—'पञ्चशूद्री'त्यत्र पञ्चव्यक्तिविवक्षायां समासविधानेनारोपितशूद्रत्वपुरस्कारेण स्त्रियां बोधेऽपि शूद्रत्वजातेर्मुख्यसम्बन्धस्याविवक्षितत्वाट्टाप् न भवति।

न च गौणमुख्यन्यायेनैव तत्र टापो वारणसम्भवे 'जाति'रिति व्यर्थमेवेति वाच्यम्, तन्न्यायस्य पदकार्यविषयकत्वेन प्रकृतेऽप्रवृत्तेः।

न चामहत्पूर्वग्रहणाभावेऽपि 'समासप्रत्ययविधौ प्रतिषेध' इति तदन्तविधिनिषेधान्महत्पूर्वकाच्छूद्रशब्दाट्टापोऽप्राप्त्या तद्व्यर्थमिति वाच्यम्, तत्सामर्थ्यादेव स्त्रीप्रत्यये तदन्तविधेर्ज्ञापनेन 'महाशूद्री'यत्र टाब्वारणाय तदावश्यकत्वात्।

न च 'स्त्रिया'मित्यस्य 'पञ्चाजी'त्यादौ टाब्वारणाय गृह्यमाणविशेषणतायाः पूर्वं सिद्धान्तिततया 'महाशूद्री'त्यत्र शूद्रशब्दार्थसमवेतस्त्रीत्वाभावान्महाशूद्रनिरूपितशक्तेः समुदायनिष्ठतया तद्घटकशूद्रमात्रस्यानर्थक्याच्च टापोऽप्राप्त्या ज्ञापितेऽपि स्वांशेऽचारितार्थ्यमिति वाच्यम्, तदन्तविधिज्ञापकत्वपरभाष्यप्रामाण्याच्छूद्रशब्दार्थगतस्त्रीत्वस्यापि महाशूद्रघटकशूद्रशब्दे स्वीकारात्स्वांशे चारितार्थ्यात्। अनुलोमसङ्कराणां मातृजातिवृत्तित्वेन—शूद्रजीविकादिदर्शनान्महाशूद्रे शूद्रत्वस्यारोपाच्छूद्रेत्यस्य सार्थकत्वाच्च।

न चैवं 'शूद्राभीर'मित्यादौ सामान्यविशेषवाचित्वेन साहित्याभावाद् द्वन्द्वाभावमाशङ्क्य—'आभीराः' जात्यन्तराणि, इति भाष्यविरोध इति वाच्यम्, अनारोपप्रभिप्रायेण तस्य भाष्यस्य सत्त्वात्। निषेधकोटौ 'जाति'रित्यस्यासम्बन्धे—

ब्राह्मणादिजात्यन्तरनिवृत्तये पूर्वं जातिमात्रविवक्षया, लिङ्गाविवक्षया च महच्छब्देन शूद्रशब्दस्य कुक्कुटाण्डवत्समासे ततः स्त्रीत्वविवक्षायां टाव् भवति, स न स्या' दिति तत्र टाप्सिद्ध्यर्थं 'जाति'रित्यस्यावश्यकत्वम्। तत्सम्बन्धे तु—महत्त्वावच्छिन्नप्रकारतानिरूपितशूद्रनिष्ठविशेष्यतानिरूपितावच्छेदकत्वासमानाधिकरणशूद्रत्वरूपजातिनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकात् शूद्रशब्दाट्टाप् नेत्यर्थेनोक्तमहाशूद्रशब्दस्यातथात्वेन टाप् सिद्ध्यति।

न च विवक्षितांशस्य पुनर्विवक्षया स्त्रीप्रत्ययोत्पत्त्यङ्गीकारे—अनुपसर्जनाधिकारस्य तदन्तविधिज्ञापकत्वपरभाष्यासङ्गतिः, 'बहुकुरुचरे'त्यादौ पूर्वं स्त्रीत्वाविवक्षया समासे तत्र ङीव्वारणाय तत्सार्थक्यादेवञ्च तत्परिहाराय विवक्षितांशस्य पुनर्विचक्षया न स्त्रीप्रत्ययोत्पत्तिरिति कल्पने न शेखरोक्तदोष इति वाच्यम्, समासात्पूर्वमपि—उपसंजनिष्यमाणन्यायेन 'महाशूद्रे'त्यत्र टावनापत्त्या 'जाते'रित्यस्यावश्यकत्वात्। ननु किं नाम तादृशं जातिवाचकत्वं यन्महाशूद्रव्यावृत्तम्? न तावज्जातित्वावच्छिन्नविषयताकोपस्थितिजनकत्वन्तत्, समासे समुदायशक्तेर्महाशूद्रशब्दान्महत्त्वावच्छिन्नप्रकारतानिरूपितशूद्रत्वावच्छिन्नविशेष्यताकोपस्थितेः सत्त्वेन शूद्रत्वावच्छिन्नविषयताकोपस्थितेरपि सत्त्वाज्जातिवाचकत्वस्य महाशूद्रशब्देऽप्यापत्तेरिति चेन्न—स्वप्रयोज्यविषयतानिरूपितविषयतानिरूपितावच्छेदकत्वाऽसमानाधिकरणजातिनिष्ठप्रकारताप्रयोजकत्वस्य वक्तव्यतया तत्र महाशूद्रशब्देऽदोषात्।

**महती शूद्रेत्यर्थकस्य महाशूद्रशब्दस्य न जातिवाचकत्वं,** तथाहि—स्वं महाशूद्रशब्दः, तत्प्रयोज्या विषयता-महत्त्वावच्छिन्ना प्रकारताख्या, तन्निरूपिता विषयता-शूद्रत्वावच्छिन्ना विशेष्यताख्या, तन्निरूपितावच्छेदकतैव शूद्रत्वे इति तादृशावच्छेदकत्वासमानाधिकरणजातिनिष्ठप्रकारताप्रयोजकत्वस्यैवाभावात्। एवञ्च-जातिविशिष्टत्वं जातिवाचकत्वम्, वै० स्वनिष्ठप्रकारताकोपस्थितिजनकत्व, स्वावच्छिन्नविषयतानिरूपितविषयतानिरूपकोपस्थित्यजनकत्वोभयसम्बन्धेनेति फलितमिति दिक्।

**८६ प्र०—'टाबृची'ति सूत्रविषये प्राचीनमतमुपपाद्य शेखरकृतामभिप्रायो वर्णनीयः।**

**उ०—अयं भावः**—'ङ्याप्प्रातिपदिका'दिति सूत्रे भाष्यकृता पादशब्दसमानार्थकं पदशब्दमाश्रित्यादन्तत्वेन टापा 'एकपदे'ति रूपं संसाध्य 'टाबृची'ति सूत्रं प्रत्याख्यातम्, तेन च सूत्रारम्भपक्षेऽपि 'पादोऽन्यतरस्या'मिति सूत्रेण प्राप्तस्य

ङीपोऽनेन वाधात् ऋचि 'एकपदे'त्येव रूपं भवतीति पादन्तस्य ऋच्यनभिधानमेवेति सूच्यते। अन्यथा पादशब्दसमानार्थकं पदशब्दमाश्रित्य प्रत्याख्यानपक्षे—ऋचि 'एकपदी' 'एकपदा 'एकपाद्' इति त्रीणि रूपाणि, आरम्भपक्षे तु 'एकपदी' 'एकपदे'ति रूपद्वयमिति फलभेदेन प्रत्याख्यानमसङ्गतं स्यात्। तथा च पूर्वसूत्रापवादत्वाङ्गीकारेण सूत्रारम्भपक्षेऽपि 'एकपदे'त्येकमेव, प्रत्याख्यानेऽपि पादन्तस्य ऋच्यनभिधाना'देकवदे'त्येकमेव रूपमिति **प्राचीनमतम्।**

**शेखरकृतस्तु**—'शेषाद्विभाषे'ति सूत्रभाष्यविरोधात् 'टाबृची'ति सूत्रस्यापवादत्वोक्तिर्न समीचीना। तत्र हि प्रतिपदविहितसमासान्तानां कपो वैकल्पिकत्वेन तदभावे सावकाशत्वमुक्तम्। तदनुसारेणाऽस्यापि पूर्वसूत्रस्य वैकल्पिकत्वेन तदभावे सावकाशत्वात्। प्रत्याख्यानपक्षात् फलभेदनिराकरणन्तु 'टाबृची'त्यत्रापि 'अन्यतरस्या' मित्यस्यानुवृत्त्या विकल्पद्वयेन 'एकपदी' एकपात्' 'एकपदे'ति रूपत्रयसाधनेनाप्युपपद्यते।

न चारम्भेऽपवादत्वात् 'एकपदे'ति प्रत्याख्याने त्रीणीति फलभेदभङ्गाय—ऋचि पादन्तस्यानभिधानमिति प्राचीनरीतिरेवोचितेति वाच्यम्, पूर्वोक्तभाष्यरीत्याऽपवादत्वस्यासम्भवेन सूत्रीरीत्या पाक्षिकस्य 'एकपदीत्यस्यासिद्ध्यापत्तेरित्याहुरिति दिक्।

**८७ प्र०—अनुपसर्जनाधिकारस्य कथं तदन्तविधिज्ञापकता ? किं किञ्चानेन ज्ञाप्यते ? इति सुस्पष्टं निगद्य तदन्तविधिफलं प्रतिपाद्यताम्।**

**उ०—अयमाशयः**—अनुपसर्जनाधिकारस्य 'वहुकुरुचरा' इत्येव व्यावर्त्यम्। 'टिड्ढाणञि'त्यत्र द्वितीयतदन्तविध्यभावे वहुकुरुचरेति समुदायस्य टिदन्तत्वविरहादेव ङीपोऽप्राप्त्याऽधिकारसूत्रं व्यर्थं सत् स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।

ननु आचारक्विवन्तात्कर्त्तरि क्विपि तदन्तविधिमन्तरेणाप्युपसर्जनव्यावृत्तयेऽनुपसर्जनाधिकारस्य चारितार्थ्यात् तस्य तदन्तविधिज्ञापकत्वं न युक्तमिति चेन्न, आचारक्विवन्तप्रकृतिककर्त्तृक्विवन्तानां स्त्रियामनभिधानात्।

ननु आपिशलिना प्रोक्तमित्यर्थे 'तेन प्रोक्त'मित्यणि आपिशलशब्दः—आपिशलमधीते इत्यर्थे 'तदधीते तद्वेदे'त्यणि 'प्रोक्ताल्लुगि'ति लुप्ते स्त्रियामदन्तत्वाद्टापि 'आपिशला ब्राह्मणी'त्यत्र ङीब्वारणाय तदिति चेन्न, प्रोक्ताणः स्त्रियामवर्त्तमानात्' अध्येत्रणो लुप्तत्वाच्च।

न चाध्येत्रणो लुप्तत्वेऽपि प्रत्ययलक्षणेन तमाश्रित्य ङीब्दुर्वार इति वाच्यम्, 'अच्योऽकार' इत्यर्थेन वर्णाश्रयत्वात् 'वर्णाश्रये नास्ति प्रत्ययलक्षणमि'ति निषेधात्।

नचाध्येत्रर्थगत[illegible]निमित्तक एव ङीप् स्यादिति वाच्यम्, 'स्त्रिया' मित्यस्यगृह्यमाणविशेषणत्वेन स्त्रियामण्योऽकारस्तदन्तादित्यर्थेन प्रत्यासत्त्या यदणन्तात् स्त्रियाम्प्रत्ययविधानं तस्याणो यत् स्त्रीत्वविशिष्टे उत्पत्तिस्तस्यैव स्त्रीत्वस्य 'स्त्रिया' मित्यनेन विवक्षितत्वात्। एवञ्च 'काशकृत्स्ना ब्राह्मणी'त्यत्र न ङीबापत्तिशङ्कासम्भावोऽपि।

ननु 'स्त्रिया' मित्यस्य गृह्यमाणविशेषणत्वे ज्ञापितेऽपि तदन्तविधौ बहुकुरुचरेत्यत्राधिकारव्यावर्त्यता नोपपद्यत इति चेन्न, 'अनुपसर्जना'दिति सूत्रारम्भसामर्थ्यात् 'स्त्रिया' मित्यस्य प्रातिपदिकविशेषणतायाश्च ज्ञापनेनादोषात्।

न च स्त्रियामित्यस्य ङीप्प्रकृतिविशेषणत्ववत्-अनुपसर्जनादित्यस्यापि तद्विशेषणत्वेन बहुकुरुचरेत्यादेस्तद्व्यावर्त्यत्वं न स्यात् तदन्तसमुदायस्यानुपसर्जनत्वादिति वाच्यम्, अनुपसर्जनादित्यस्यापि प्रातिपदिकविशेषणत्वे 'भक्षितेऽपि लशुने न शान्तो व्याधि'रिति न्यायेनाधिकारसूत्रं व्यर्थं सत् यावता विना यदनुपपन्नं तावत् सर्वं तदन्यथाऽनुपपत्त्या कल्प्यते, इति अनुपसर्जनादित्यस्य गृह्यमाणविशेषणत्वमपि ज्ञापयतीति दोषाभावादिति।

द्वितीयतदन्तविधिफलन्तु-कौम्भकारेयमात्रसिद्धिः। तथा हि-तदन्तविधौ सति कुम्भकारशब्दात् समुदायात् ङीपि प्रत्ययग्रहणपरिभाषया समुदायस्यैव प्रत्ययान्तत्वात् समुदायादेव ढकि कुम्भशब्दोकारस्यैव वृद्ध्या 'कौम्भकारेय' इत्यादि सिद्ध्यति। तदन्तविध्यभावे तु-प्रत्ययग्रहणपरिभाषया कुम्भकारशब्दस्यानणन्तत्वेनावयवात्कारशब्दात्स्त्रीप्रत्यये कुम्भेनैकार्थीभूतस्यापि ङीप्विशिष्टस्यापत्येन योगेऽजहत्स्वार्थवृत्तिसद्भावात्कारीशब्दस्याप्यपत्यार्थेन योगे कदाचित् ततोऽपि ढकि तन्निरूपिताङ्गत्वस्य विशिष्टेऽभावेन ककारोकारस्य वृद्ध्यभावे 'कुम्भकारेय' इत्यप्यापद्येत।

न च कुम्भेनैकार्थीभूतस्य तस्यापत्येन योगो न युक्त इति वाच्यम्, ययोर्वृत्तिस्तन्मात्रवृत्त्येकार्थीभाव एव वृत्तिनिमित्तमित्यत्र प्रमाणाभावात्।

न च कृद्ग्रहणपरिभाषया विशिष्टादेव ङीबिति न पाक्षिकदोषो भविष्यतीति वाच्यम्, कृद्ग्रहणपरिभाषायाः कृन्मात्रग्रहणे प्रवृत्त्या प्रकृते तदप्रवृत्तेः। न च तदन्तग्रहणेऽपि कारशब्दस्य व्यपदेशिवद्भावेनाणन्तान्तत्वात् ततोऽपि कदाचिन्ङीपि कुम्भकारेयो दुर्वार इति वाच्यम्, एतदधिकारादेव-व्यपदेशिवद्भावस्यासहाय एव प्रवृत्तेरपि ज्ञापनात्। अणन्तस्यार्थत्वाभावेनाप्रातिपदिकत्वाच्च।

न च समुदायान्ङीप्यपि स्त्रीप्रत्यये तदादिनियमाभावेन केवलादपि कदाचि-

ढ्ढकि कुम्भकारेयो दुर्वार एवेति वाच्यम्, यथा प्रत्ययग्रहणपरिभाषयाऽधिकस्य प्रत्ययान्तत्वं व्यावर्त्यते, तथैतदधिकारादेव–प्रत्ययग्रहणपरिभाषापवादभूत–'स्त्रीप्रत्यये चानुपसर्जनेने'ति परिभाषयाऽपि प्रत्ययग्रहणपरिभाषाव्यावर्त्यस्याधिकस्यैव स्त्रीप्रत्ययान्तत्वबोधनेनादोषादिति दिक्।

**८८ प्र०—'त्र्येण्ये'ति प्रयोगविषये प्राचीनमतमुपपाद्य तत्र को नव्यानां सिद्धान्त इति निरूपणीयम्।**

उ०—अयमाशयः—वृत्तिकारादिव्याख्यानुरोधेन 'वर्णादनुदात्तात्तोपधातो न' इति सूत्रेऽनुवृत्तस्यानुपसर्जनादित्यस्य तदन्तविशेषणतैव। तथा च 'त्र्येण्ये'त्यत्र त्रीणि एतानि यस्याः' सेति बहुव्रीहौ–एतशब्दस्योपसर्जनत्वेऽपि त्र्येतशब्दस्यातथात्वेन ङीप् नादेशश्च सिद्ध्यतीति **प्राचीनाः।**

**नवीनास्तु**—'अनुपसर्जना'दित्यस्य तदन्तेऽन्वयाङ्गीकारे 'टिड्ढाणञि'ति सूत्रेऽपि तथैवान्वयेन बहुकुरुचरेत्यत्र टिदन्तसमुदायस्यानुपसर्जनत्वान्ङीपो दुर्वारत्वेन ज्ञापितेऽपि तदन्तविधौ 'अनुपसर्जना'दिति व्यर्थमेव स्यादतस्तस्य गृह्यमाणविशेषणतैवोचिता।

अत्र **प्रमाणन्तु**—'उपमानानी'ति सूत्रस्थं भाष्यमेव। तत्र हि—शस्त्रीश्याम' इत्यत्र शस्त्री श्यामेवेत्युपमितसमासे वृत्त्या देवदत्तादेर्लाभेन श्यामाशब्दस्य देवदत्तनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकतया—इतरार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपलौकिकोपसर्जनत्वाद् 'गोस्त्रियो'रिति ह्रस्वत्वे रूपसिद्धावपि कुम्भकपालं लोहितमिव 'कुम्भकपाललोहिनी'त्यत्र 'वर्णादनुदात्ते'ति ङीब्न स्यादित्युक्तम्। 'अनुपसर्जनादि'त्यस्य तदन्तविशेषणत्वे तु 'कुम्भकपाललोहिते'त्यस्यानुपसर्जनतया ङीपः प्राप्त्या भाष्यासङ्गतिः स्पष्टैव। गृह्यमाणविशेषणत्वे तु—गृह्यमाणस्य 'लोहिते'त्यस्य समासानन्तरं समासार्थोपमेयविशेषणत्वेनोपसर्जत्वान्ङीपोऽप्राप्त्या 'ईकारो न प्राप्नोती'ति भाष्यं साधु सङ्गच्छते। एवञ्च—'अनुपसर्जना'दिति गृह्यमाणविशेषणमेव। 'त्र्येण्ये'त्यत्र तु प्राक्–'एनी शब्दं संसाध्य पश्चात्त्रिशब्देन 'सुप्सुपे'ति समासे त्रिषु–त्र्येणी तया 'त्र्येण्ये'त्येवं साधनीयमित्याहुरिति दिक्।

**८९ प्र०—सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।**
**आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥**
**इति गुणलक्षणं त्वेकदेशयुक्तिर्बहुविशेषणानां वैयर्थ्यादिति नागेशः।**

**कस्तावदेतस्याः कारिकाया अर्थः? अत्र कथं केषाञ्च विशेषणानां वैयर्थ्यम्? तत्सार्थक्यं सम्भवति न वेति सर्वं सुस्पष्टं प्रतिपाद्यताम् ॥**

**उ०—अयं भावः**-सत्त्वे = द्रव्ये, निविशते = सम्बद्ध्यते, तदाश्रित्य-उत्पद्यते-तिष्ठति चेत्यर्थः, एवम् तत एव-अपैति = नश्यति, पृथग्जातिषु = नानाजातीयेषु घटपटादिषु, दृश्यते = समवायेन तिष्ठति-स गुण इत्येकं लक्षणम्।

तथा च द्रव्याधिकरणकोत्पादविनाशशालित्वे सति नानाद्रव्येषु समवायसम्बन्धेन वर्त्तमानत्वमिति लक्षणं फलितम्।

आधेयः = उत्पाद्यः, अक्रियाजः = अनुत्पाद्यः, असत्वप्रकृतिः = अद्रव्यस्वभावः। एवञ्च नित्यानित्यवृत्तिजात्तिमत्त्वे सति द्रव्यभिन्नत्वं गुणत्वमिति लक्षणं निष्पन्नम्।

अत्र—घटत्वादिजातीनां नित्यतया नाशाभावात् 'अपैती'त्यनेनैव तद्व्यावृत्तिसम्भवे 'निविशते, इत्यस्य वैयर्थ्यम्। एवम्-'आधेय, इति व्यर्थम्-'अक्रियाज, इत्यनेनैव क्रियाव्यावृत्तेः। तथा चाक्रियाज, इत्यनेन द्रव्यव्यावृत्तौ 'असत्वप्रकृति'रिति व्यर्थम्।

**वस्तुतस्तु**—सर्वेषामपि विशेषणानां सार्थक्यमेव। तथा हि—'सत्त्वे, निविशतेऽपैती'त्याद्यविशेषणानुपादाने द्रव्याधिकरणकोत्पादविनाशशालित्वमित्यस्यालाभे—अभावस्यापि गुणत्वापत्तिः। एवं नित्यैकमात्रवृत्त्याकाशत्वादेर्गुणत्वापत्तिः। अत्रापि विशेषणे उत्पत्तिमात्रोक्तौ—ध्वंसेऽतिव्याप्तिः, नाशमात्रोक्तौ—प्रागभावेऽतिव्याप्तिः। 'पृथग्जातिषु' इत्यस्यानुपादाने-आत्मनिष्ठधर्मेऽतिव्याप्तिः। 'आधेय' इत्यस्यानुक्तौ घटादीनां गुणत्वापत्तिः। 'अक्रियाजश्च' इत्यस्यानुपादाने—क्रियायामतिव्याप्तिः। द्रव्यभिन्नत्वस्यानुक्तौ घटादिद्रव्येऽतिव्याप्तिः। एवञ्च न विशेषणवैयर्थ्यमित्यनुसन्धेयमिति दिक्।

**९० प्र०—'जातेरस्त्री'ति सूत्रे यानि मतान्युपपादितानि तान्यसङ्कीर्णतयोपपाद्य तत्र सप्रमाणं नागेशसिद्धान्तो व्यवस्थाप्यताम्।**

**उ०**—ननु 'भिन्नेष्वभिन्नाभिधाननिमित्तं जातिः, भिन्नेष्वभिन्नप्रत्ययनिमित्तं जातिरित्युभयलक्षणपरभिन्नेष्वभिन्नाभिधानप्रत्ययनिमित्तं जातिरिति वेदान्तिसम्मतस्य, 'नित्यत्वे सत्येकत्वे सति समवायसम्बन्धेनानेकवृत्तित्वमिति तार्किकसम्मतस्य वा जातिलक्षणस्याङ्गीकारे शुक्लादिगुणस्य नित्यत्वैकत्वपक्षे शुक्लेत्यादावतिव्याप्तिः, अव्याप्तिश्च 'कठी, औपगवी'त्यादौ, 'सवर्णेभ्यः सवर्णासु जायन्ते हि सजातयः' इत्यादिस्मृत्या जननेन यत्प्राप्यते ब्राह्मणत्वादि-सा जातिश्चेद्युवत्यादावव्याप्तिः, तथा च

'युवतितरे'त्यत्र 'जातेश्चे'ति पुंवत्त्वप्रतिषेधो न प्रतिपद्येतेति चेन्न, 'आकृतिग्रहणा जाति'रिति लक्षणस्यैव विवक्षितत्वात्।

[ **आकृतिः** = अवयवसन्निवेशः, आकृतिर्ग्रहणं यस्येति विग्रहः, अनुगत-संस्थानव्यङ्ग्येति तदर्थः। ]

बालाद्यवस्थाभेदभिन्नानेकदेशवृत्तिदेवदत्तत्वादेराकृतिव्यङ्ग्यत्वेन जातित्वं तु नाशंक्यम्, समानकालिकानेकव्यक्तिवृत्तित्वस्य विशेषणदानेन समानकालिकानेकव्यक्ति-वृत्तित्वे सत्यनुगतसंस्थानव्यङ्ग्यत्वमित्येतादृशलक्षणेनादोषात्॥

एवञ्च—परस्परं विभिन्नतया प्रतीयमानानेकव्यक्तिवृत्तित्वविशिष्टसंस्थानज्ञान-जन्यज्ञानविषयीभूता जातिरिति लक्षणं पर्यवसन्नम्।

न चेदं लक्षणं वृषलत्वादावव्याप्तम्, तदवयवसन्निवेशस्य ब्राह्मणादिसाधार-ण्येन वृषलत्वादीनां तद्व्यङ्ग्यत्वाभावादिति वाच्यम्, लिङ्गानाञ्च न सर्वभाक्, सकृदा-ख्यातनिर्ग्राह्येति लक्षणान्तरस्य सत्त्वात्। असर्वलिङ्गत्वे सत्येकस्यां व्यक्तौ कथना-द्व्यक्त्यन्तरे कथनं विनाऽपि सुग्रहा जातिरिति तदर्थः। तथा च वृषलत्वस्यासर्व-लिङ्गत्वात्—एकस्यां व्यक्तौ वृषलत्वे—उपदिष्टे तदपत्यसहोदरादिषु तदुपदेशं विना तस्य सुग्रहत्वाच्च जातित्वमुपपद्यते इति।

न चैवमपि 'औपगवी' कठीत्याद्यसङ्ग्रहः, औपगवत्वादेरनुगतसंस्थानव्यङ्ग्य-त्वाभावात्, असर्वलिङ्गत्वाभावाच्चेति वाच्यम्, 'गोत्रञ्च चरणैः सहे'ति तृतीय-स्यापि लक्षणस्याभिप्रेतत्वात्। एवञ्च जातेर्लक्षणत्रयं पर्यवसन्नमित्यवसेयम्।

**नागेशास्तु**—'आकृतिग्रहणा जातिर्लिङ्गानाञ्च न सर्वभाक्, सकृदाख्यात-निर्ग्राह्ये'ति समष्ट्या 'एकमेव लक्षणं न तु लक्षणद्वयम्। तथा हि—आकृतिग्रहणे-त्यत्र—आकृतिपदम् = उपदेशोपलक्षणम्, एवञ्च—आकृतिद्वारा साक्षाद्वोपदेशेन ग्राह्या जातिरिति फलितम्। तत्र गोत्वादिजातिः—ईदृशाकारो गौरित्याकृत्युपदेशग्राह्या। ब्राह्मणत्वादिजातिस्तु—'अयं ब्राह्मण' इति साक्षादुपदेशग्राह्या।

न चैवं शुक्लादिगुणानां जातित्वं दुर्वारम्, अयं शुक्ल इत्युपदेशग्राह्यत्वादिति वाच्यम्, आकृतिग्रहणं—जातिग्राहकोपदेशस्याप्युपलक्षणमित्यस्याङ्गीकारेण 'अयं शुक्ल' इत्यादेर्गुणग्राहकोपदेशत्वेन दोषाभावात्। 'लिङ्गानाञ्च न सर्वभागि'ति जातिस्वरूपानुवादकम्। एवञ्च शुक्लादिगुणानां नित्यत्वैकत्वमतेऽपि ततो जातित्वं वार्यते। न चानुवादमात्रेणातिव्याप्तिर्वारयितुं न शक्यत इति वाच्यम्' विशेषण-तयैतदर्थप्रवेशस्याभिमतत्वात्। तथा च आकृतिग्रहणेत्येवेत्येवकारेण द्वितीयलक्षण-

करणमात्रं व्यवच्छिद्यते, न त्वसर्वलिङ्गत्वे सतीति विशेषणमपीत्यवसेयम् । जाताचपि लिङ्गसम्बन्धसम्भवादेव 'विशेषणानाञ्चे'ति सूत्रे जातेराविष्टलिङ्गत्वं भाष्ये प्रतिपादितम्' तदर्थञ्च नियतलिङ्गत्वमिति कैयटो व्याख्यत् । न च लक्षणद्वैविध्योपगमे–आद्यस्य द्वितीयलक्षणाप्राप्तप्रापणार्थतया 'तटन्त्रिषु' इति कोशवलेन तटशब्दस्य सर्वलिङ्गत्वेऽपि जातिकार्यं सिद्ध्यति, एकलक्षणत्वे त्वसर्वलिङ्गत्वे–इति विशेषणदाने तन्नोपपद्यत इति वाच्यम्, भाष्यप्रामाण्याज्जातेरेकशब्दवाच्याया त्रिलिङ्गत्वे विरहात् । 'तटन्त्रिषु' इति तु कोशकृतां प्रमाद एव । 'सकृदाख्यातनिर्ग्राह्ये'त्यनेनैकत्वमनेकानुगतत्वञ्च बोध्यते । तथा च सकृत् = एकवारं क्वचिद्व्यक्तौ साक्षादाकृतिद्वारा वोपदिष्टा व्यक्त्यन्तरे ग्रहीतुं शक्येति तदर्थः ।

'गोत्रञ्च चरणैः सहे'ति त्वतिदेश एव । 'आकृतिग्रहणे'त्यादेः निरुक्तार्थकत्वेन गोत्वब्राह्मणत्वयोरेकलक्षणेन सङ्ग्रहादेव—

'प्रादुर्भावविनाशाभ्यां सत्त्वस्य युगपद्गुणैः ।
असर्वलिङ्गां बह्वर्थां तां जातिं कवयो विदुः ॥

इति तदुभयसंग्राहकं लक्षणान्तरं भाष्योक्तमुपपद्यते । एवञ्चैतदेकवाक्यतया पूर्वलक्षणेऽपि नागेशाभिहितव्याख्यैवौचित्यं परिचुम्बति । एकत्वक्षणत्वस्येष्टत्वादेव 'कः पुनरेतयोर्जातिलक्षणयोर्विशेषः । यथा पूर्वलक्षणं तथा 'कुमारीभार्य, इति भवितव्यम्, यथोत्तरं तथा 'कुमारभार्यः' इति भाष्ये लक्षणमित्येकवचनमुच्यमानमुपयुज्यते । अत एवाकडारसूत्रशेषेऽपि 'आकृतिग्रहणा जाति'रित्येवोक्तमित्याहुरिति दिक् ।

**९१ प्र०—'गोत्रञ्च चरणैः सहे'त्यत्र प्राचीननवीनयोर्मतं प्रतिपाद्य तयोर्युक्तः पक्षो युक्त्या विविच्यताम् ।**

उ०—अयमाशयः—'गोत्रञ्च चरणैः सहे'त्यत्र गोत्रपदेनापत्यमात्रं विवक्षितम् । तेन 'अनन्तरापत्यप्रत्ययान्ते 'अवन्ती'त्यत्र 'जातेरस्त्री'त्यनेन जातिप्रयुक्तो ङीषि'त्यनुपसर्जनादिति सूत्रभाष्यं सङ्गच्छते । शास्त्रीयस्य तस्य ग्रहणे तु प्रकृते जातित्वाभावात् ङीषोऽप्राप्त्या भाष्यं विरुध्येतेति प्राचीनमतपरिष्कारः ।

**नवीनास्तु**—'एको गोत्रे' इति सूत्रभाष्यविरोधाद् गोत्रपदेनापत्यमात्रस्य ग्रहीतुमशक्यत्वेन शास्त्रीयमेवात्र गोत्रं ग्राह्यम् । तत्र हि—'गोत्राचूनि प्रत्ययो भवति, 'स्त्रियां लु'गिति न्यासे 'औपगवी माणविके'त्यत्राण्योऽनुपसर्जनमित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति, माभूदेवमणन्तादनुपसर्जनादित्येवं भविष्यति' इत्यनुपसर्जनाधिकारस्य वैयर्थ्यमननुसन्दधानेन प्रौढ्या पूर्वपक्षिणोक्ते–तदङ्गी-

कृत्यैव—'इह तर्ह्यौपगवीभार्य्यः' जातिलक्षणः पुंवत्वप्रतिषेधो न प्राप्नोति, मा भूदेवं—'वृद्धिनिमित्तस्येत्येवं भविष्यति, एवन्तर्हि ग्लुचुकायनीभार्ये दोषः' इत्युक्तम्। लौकिकापत्यमात्रस्य जातित्वे तु निरुक्तप्रयोगेऽपि जातित्वसद्भावात् 'टिड्ढे' त्यपेक्षया परत्वाज्जातिलक्षणङीष एव प्राप्त्या 'अणयोऽनुपसर्जन'मित्यादिकथनेन। एवञ्च—'औपगवीभार्य' इत्यत्र 'जातेश्चे'ति निषेधप्राप्तेर्जागरूकत्वेन 'पुंवत्त्वप्रतिषेधो न प्राप्नोती'ति कथनेन च भाष्यासङ्गतिः स्पष्टैव। अपत्यविशेषस्य गोत्रशब्देन ग्रहणादेव 'ब्राह्मोऽजाता'विति सूत्रेऽपत्ये जातौ नेत्यर्थः सङ्गच्छते। अपत्यमात्रग्रहणे त्वपत्यस्य जातित्वावश्यं भावादपत्ये जातौ टिलोपो नेत्यर्थासङ्गतिः, ब्राह्मो नारद' इति प्रयोगासिद्धिश्च।

न चैवं नवीनानामपि 'अनुपसर्जना'दिति सूत्रभाष्यविरोध इति वाच्यम्, 'अवन्ती'त्यत्रानन्तरेऽश्वत्थाम्नि द्रौणायनिवद्गोत्रत्वारोपेणेष्टसिद्ध्या विरोधपरिहारस्योपपादयितुं शक्यत्वात्। न चैवं रीत्या 'गोत्राद् यूनि' इति सूत्रस्य लुग्विधायकत्वपक्षीयम् 'एको गोत्रे' इति भाष्यमपि सुयोजमिति वाच्यम्, 'युवैव न गोत्र'मिति नियमेन तत्संज्ञानिषेधात् यूनि शास्त्रीयगोत्रत्वारोपासम्भवादित्याहुः।

**वस्तुतस्तु**—प्राचीनमतेऽपि न कश्चिद्दोषः। तथा हि—श्रूयमाणोऽनुपसर्जनं यो गोत्रप्रत्ययस्तदन्तस्य जातित्वमित्यर्थेन लौकिकगोत्रस्य ग्रहणेऽपि 'औपगवी माणविके'त्यत्र श्रूयमाणस्याणोऽनुपसर्जनत्वाभावेन जातित्वाभावादनुपसर्जनलक्षण ईकारो न प्राप्नोतीत्युक्तम्। 'औपगवीभार्य' इत्यत्राप्येवं रीत्यैव जातित्वाभावकथनं न तु शास्त्रीयगोत्रत्वाङ्गीकारेण। 'ब्राह्मोऽजाता' वित्यत्र चाजातिग्रहणसामर्थ्यादाकृतिग्रहणेत्याद्यनतिदिष्टजातेरेव ग्रहणम्, ब्राह्मो नारद' इति चाजातावेव, नारदे ब्राह्मत्वजातेर्विरहात्। ब्रह्मणोऽपत्यत्वेन ब्राह्मत्वस्य जातित्वे तु चाण्डालादेरपि तत्त्वं दुर्वारम्, एवञ्च गोत्रशब्देन लौकिकापत्यमात्रस्य ग्रहणेऽपि न काऽपि क्षतिरित्यनुसन्धेयमिति दिक्।

## अथ कारकप्रकरणम् ॥ १४ ॥

**६२ प्र०—प्राचीनमतेन प्रातिपदिकार्थं निरूप्य परिष्कृत्य च नव्यमतानुसारेण सप्रमाणं तन्निरूप्य परिष्क्रियताम्।**

**अयं भावः**—पञ्चकं प्रातिपदिकार्थ इति वैयाकरणसिद्धान्तााल्लिङ्गस्यापि प्रातिपदिकार्थत्वेन तटादिशब्देऽपि प्रातिपदिकार्थ इत्येव प्रथमासिद्धेर्लिङ्गग्रहणं व्यर्थं

सत् प्रातिपदिकार्थपदेन नियतोपस्थितिकस्यैवार्थस्य ग्रहणमिति नियमांशं क्रोडीकरोति, तथा चानियतलिङ्गस्थले कदाचित्पुंस्त्वस्य कदाचित्स्त्रीत्वादेर्भानेन कस्यापि लिङ्गस्य नियमेनानुपस्थित्या प्रातिपदिकार्थ इत्यनेनासिद्धेर्लिङ्गग्रहणं सार्थक्यं भजते। तत्र निपूर्वकयमधातोर्व्यापकत्वमर्थः, क्तप्रत्यायार्थ आश्रयः, यत्पदोत्तरषष्ठ्या विषयत्वमर्थः। तथा च—यद्विषयिणी उपस्थितिर्व्यापकताश्रयीभूता स प्रातिपदिकार्थ इति लभ्यते।

व्यापकत्वस्य व्याप्यनिरूपितत्वेन यत्किञ्चिन्निरूपितव्यापकत्वस्याव्यभिचरितत्वेन किन्निरूपितव्यापकत्वमिति जिज्ञासायां—यस्मिन्नुच्चारिते प्रातिपदिके यस्यार्थस्य नियमेनोपस्थितिस्स नियतोपस्थितिक इति शेखरे प्रतिपादितम्। एवञ्च—प्रातिपदिकोच्चारणनिष्ठव्याप्यतानिरूपितव्यापकताश्रयीभूतोपस्थितिनिरूपितविषयताश्रयः प्रातिपकार्थ इति फलितम्।

तदेवं—स्वजनकशक्तिज्ञाननिरूपितत्व, स्वजनकशक्तिज्ञानजन्यशाब्दबोधनिष्ठभेदप्रतियोगितानवच्छेदकत्वैतदुभयसम्बन्धेन—शाब्दबोधविशिष्टविषयताश्रयत्वं प्रातिपदिकार्थत्वमिति परिष्कृतम्भवति॥ ननु—समवायेन प्रातिपदिकोच्चारणस्याधिकरणमुच्चारयितानुपस्थितेश्च श्रोतेति सामानाधिकरण्यविरहेण—'प्रातिपदिकोच्चारण—समानाधिकरणात्यन्ताभावाऽप्रतियोगित्व' रूपप्रातिकोच्चारणव्यापकत्वमुपस्थितेर्गगनप्रसूनोपममिति चेन्न, स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धस्यैव व्याप्यतावच्छेदकत्वेनाभ्युपगमात्।

तथा च 'प्रातिपदिकोच्चारणनिरूपित—'स्वजन्यश्रावणप्रत्यक्षसमवायित्वसम्बन्धावच्छिन्नाऽधिकरणतावन्निरूपितवृत्तितावदभावीयप्रतियोगितानवच्छेदकधर्मावच्छिन्नोपस्थितीयविषयताश्रयत्वं प्रातिपदिकार्थत्व'मिति फलितम्।

न चैवं शक्तिग्रहाभाववति तादृशसम्बन्धेन प्रातिपदिकोच्चारणाधिकरणेऽपि श्रोतरि—उपस्थितेरभावेन—एवं शक्तिग्रहवतोऽपि—लुप्तसंस्कारस्याजातसंस्कारस्यापि वा तत उपस्थितेरभावेन च व्यापकत्वभङ्ग एवेति वाच्यम्, 'स्वकर्मीभूतप्रातिपदिकनिष्ठशक्तिग्रहाहितोद्बुद्धसंस्कारसमवायित्व, स्वजन्यश्रावणप्रत्यक्षसमवायित्वो'भयसम्बन्धस्यैव व्याप्यतावच्छेदकत्वेनादोषात्। न चैवमपि निरुक्तोभयसम्बन्धेन नियतलिङ्गरामादिशब्दोच्चारणवतीवानियतलिङ्गतटादिशब्दोच्चारणवत्यपि समवायेन लिङ्गत्रयोपस्थितेरपि नियमेन सत्त्वात्तत्रापि लिङ्गस्य प्रातिपदिकार्थत्वेन लिङ्गग्रहणं व्यर्थमेवेति वाच्यम्, उपस्थितपदेन शाब्दबोधस्य ग्रहणेन—पुंस्त्वादिबोधस्य तत्र विसर्गाम्

ङीष्समभिव्याहारनियततया ङीष्समभिव्याहृततटशब्दश्रवणे पुंस्त्वादिविषयकबोधस्य, अमूसमभिव्याहृततटशब्दश्रवणे पुंस्त्रीविषयकबोधस्य, विसर्गसमभिव्याहृततटशब्दश्रवणे स्त्रीक्लीबलिङ्गविषयकबोधस्य, चानुदयेनानियतलिङ्गस्थले लिङ्गबोधस्याव्यापकत्वात्तदर्थं लिङ्गग्रहणात् ।

न चाकांक्षायोग्यतासत्तितात्पर्यज्ञान–विभिन्नविषयकप्रत्यक्षसामग्रीविरहादिशाब्दबोधकारणाभावे घटशब्दोच्चारणेऽपि शाब्दबोधानुदयाद्व्यापकत्वाभङ्ग एवोपस्थितेरिति वाच्यम्, 'स्वकर्मीभूतप्रातिपदिकजन्यशाब्दबोधसमवायित्व'स्यापि व्याप्यतावच्छेदकसम्बन्धत्वेनादोषादिति **प्राचीनाः**। अत्र शेखरोक्तरीत्या प्रातिपदिकोच्चारणे व्याप्यतास्वीकारे गौरवमुद्भाव्यते चेल्लाघवात् प्रातिपदिकनिष्ठैव व्याप्तता स्वीकार्या, व्याप्यतावच्छेदकसम्बन्धता च–'स्वजन्यश्रावणप्रत्यक्षसमवायित्व' स्वनिष्ठशक्तिग्रहाहितोद्बुद्धसंस्कारसमवायित्व, स्वजन्यशाब्दबोधसामग्रीसमवायित्वा' दाविति ।

**नवीनास्तु**—प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थः । तदाश्रयश्च मुख्य इव प्रवृत्तिनिमित्तप्रकारकारोपविशेष्योऽपि गृह्यते । आरोपिततदाश्रयस्य ग्रहणादेव "गोपी'त्यादौ स्वादिप्रकृतेर्गोपत्वप्रकारकारोपविशेष्यार्थबोधकत्वेऽपि न क्षतिः ।

अत्र प्रमाणन्तु–लिङ्गग्रहणमेव । प्रातिपदिकवाच्यस्य प्रातिपदिकार्थपदेन ग्रहणे तु 'स्वमोर्नपुंसका'दित्यादिशास्त्रप्रामाण्येन लिङ्गस्यापि प्रातिपदिकार्थतया तत एवेष्टसिद्धौ लिङ्गग्रहणं व्यर्थमेव स्यात् । लिङ्गस्यापि प्रातिपदिकार्थत्वादेव 'स्त्रिया'मिति सूत्रे–'स्त्रीत्वे द्योत्ये' इत्यर्थे भाष्यसिद्धान्तः सङ्गच्छते । अन्यथा तस्य प्रत्ययवाच्यत्वस्यैव वक्तव्यत्वेन 'स्त्रीत्वे वाच्ये टा' वित्यर्थस्यैव वक्तव्यत्वेन तदसङ्गतिः स्पष्टैव ।

न च 'पुंसि विद्यमानस्य शसः सस्य नत्व'मित्यर्थक 'तस्मादि'ति शास्त्रप्रामाण्याल्लिङ्गं प्रत्ययार्थ एवेति वाच्यम्, तत्र 'पुंसी'त्यस्य पुंशब्दस्य प्रकृतित्वे इत्यर्थेन प्रातिपदिकवाच्यत्वस्यैव लाभात् ।

न च 'तिङ्कृत्तद्धितसमासनिपाताभिहितकारकवाचिनी प्रथमे'त्यर्थकाभिहिते प्रथमेति वार्त्तिकबलादभिहितकारकाणामपि प्रथमार्थत्वलाभात् प्रातिपदिकार्थमात्रे प्रथमेत्यसङ्गतमिति वाच्यम्, तस्य 'तत्तत्प्रातिपदिकार्थगतकारकशक्तावन्येनाभिहितायां स्वार्थे प्रातिपदिकात्प्रथमे'त्यर्थेन दोषाभावात्, प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थपदेनाभिप्रेतत्वादेव 'प्रातिपदिकार्थः सत्ते'ति वृत्तिकृतायुक्तम् । तत्र सत्तेति प्रवृत्तिनिमित्तोपलक्षणम्, आश्रयस्याक्षेपेणैव लाभः । तथा च प्रातिपदिकार्थ

इत्यस्यालिङ्गा–लिङ्गप्रवृत्तिनिमित्तकाश्चाव्ययपुमादय उदाहरणम्। 'कृष्णः, 'श्रीः, ज्ञानमित्यादयस्तु 'लिङ्गाधिक्ये' इत्यस्य, द्रोणः कुडवमित्यादयश्च परिमाणग्रहणस्योदाहरणम्, तत्र द्रोणत्वादिकं प्रवृत्तिनिमित्तम्। लिङ्गवत्तदवच्छिन्नेऽभेदेन परिमाणत्वेन परिमाणमपि भासते। तच्च न प्रातिपदिकार्थः, एवञ्च—'स्वतादात्म्य–स्वाश्रयत्वान्यतरसम्वन्धेन प्रवृत्तिनिमित्तविशिष्टत्वं प्रातिपदिकार्थत्वमिति फलितम्। न च घट–घटत्व–तत्समवायानां घटादिपदार्थतया तद्वाचकघटादिपदात्प्रथमानापत्तिः, इति परिमाणाधिक्ये प्रथमा। परिमाणवोधिका प्रथमेति प्राचीनोक्तं तु न युक्तम्, 'लिङ्समानाधिकरणे प्रथमे'ति वार्त्तिकविरोधात्, द्रोणो व्रीहिमानयेत्यस्यापत्तेश्च।

नव्यमते प्रवृत्तिनिमित्ततदाश्रययोरेव ग्राह्यतया मात्रग्रहणेनाधिकव्यावृत्तेरिति वाच्यम्, मात्रपदेन तदीयसमवायातिरिक्तसम्वधस्यैव व्यावृत्तेः कल्पनीयतयाऽदोषात्। तथा च—प्रातिपदिकार्थे विद्यमानत्वे सति समवायेतर–प्रातिपदिकार्थेतरार्थेऽविद्यमानात्प्रातिपदिकात्प्रथमेत्यर्थः पर्य्यवस्यतीत्याहुरिति दिक्।

**६३ प्र०—प्रातिपदिकार्थेत्यादि सूत्रे मात्रग्रहणप्रयोजनं निरूप्य तत्प्रत्याख्यानाभिप्रायश्चोपवर्ण्यताम्।**

**उ०—अयमाशयः**—प्रातिपदिकार्थेत्यादि सूत्रे मात्रग्रहणाभावे यथा 'कर्मणि द्वितीये'ति सूत्रस्य कर्मण्येव द्वितीयेत्येवंविधनियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु कर्मत्वसमानाधिकरणार्थान्तरस्य, अत एव गां दोग्धि पय इत्यत्रान्तःस्थितद्रवद्रव्यवृत्तिविभागानुकूलव्यापारानुकूलव्यापारोऽर्थ इति स्वीकारे तदयोगेऽपादानकर्मसंज्ञयोः प्राप्तौ 'अपादानमुत्तराणि कारकाणि वाधन्ते' इत्याकडारेतिसूत्रस्थभाष्योक्तरीत्या स्थितकर्मत्वमादाय द्वितीया भवति। तथाऽनेनापि प्रातिपदिकार्थसत्त्व एव प्रथमा, नतु तदसत्त्व इति नियमस्य पुरःस्फूर्त्तिकतयाऽनर्थकनिपातेभ्यः प्रथमा न स्यात्।

न चेष्टापत्तिः? तथा सति 'घटः पटो वै मम स्वं' 'घटः पटो वै मे स्व'मित्यादौ 'सपूर्वायाः प्रथमे'त्यादिशास्त्राप्रवृत्त्याऽनिष्टप्रसङ्गात्।

मात्रग्रहणसत्त्वे तु 'कर्मादियोग्यार्थकप्रातिपदिकाच्चेत्तद्रहितस्वार्थे' इत्यर्थे यथा 'अवत्सैवे'त्यत्र व्यवच्छेद्यसम्वन्धयोग्यस्यैव एवपदेन व्यावृत्तिस्तथा मात्रग्रहणव्यवच्छेद्यकर्मादियोग्यार्थकस्यैव व्यावृत्तिरित्यनर्थकनिपातेभ्यः प्रथमा सिद्धयति।

न च निरुक्तदृष्टान्तेनात्रापि तथाविधो नियम उक्तः, तत्रैव तथा नियमे किं मानमिति वाच्यम्, मात्रग्रहणस्यैव प्रमाणत्वात्। मात्रग्रहणाच्च सूत्रकारस्य प्रत्यय-

नियमपक्ष एव तात्पर्यमिति। यदि तु 'कर्मणि द्वितीयैव' इत्येवमर्थनियमपक्षोऽङ्गीक्रियेत तदा द्वितीयादीनां स्वस्वविषये प्रथमाबाधकतया कर्माद्याधिक्ये प्रथमाया अप्राप्त्या मात्रग्रहणं न कार्यमिति मात्रग्रहणप्रत्याख्यानाभिप्रायः—'तदकरणलाघवेन तु 'कर्मणि द्वितीयैव इत्यर्थनियम उक्तो भाष्यादौ' इति पङ्क्त्या सूचितः शेखरकृतेत्यनुसन्धेयमिति दिक्।

**१४ प्र०—'सम्बोधने चे'ति सूत्रं ग्रन्थरीत्या व्याख्याय तत्र विषये प्राच्यनव्ययोर्मते विशदं पृथक् दर्शनीये।**

उ०—सम्बोधनम्—अभिमुखीभवनानुकूलो व्यापारः, तत्र विशेष्यभूतव्यापारस्याविवक्षयाऽभिमुखीभवनमेव विभक्तिद्योत्यम्। तत्फलं प्रवृत्तिनिवृत्ती। यथा—हे देवदत्त! तत्र गत्वा जलन्तत आनीयताम्, इति वाक्यप्रयोगो यत्र कृतो मैत्रेण तत्र देवदत्तस्य देवदत्तसमवेततद्देशाधिकरणकगमनविशिष्टजलकर्मकतद्देशापादानकप्रेरणाविषयानयनाभिन्नार्थबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकः शाब्दबोधो जायते तदनन्तरं देवदत्तस्य प्रवृत्तिर्भवति।

यत्र तु—देवदत्त! तत्रारण्ये व्याघ्रादिसेविते न गन्तव्यम्' इति यज्ञदत्तेनोक्तन्तत्र देवदत्तस्य प्रेरणाविषयतद्देशाधिकरणकगमनाभावाभिन्नार्थविषयकदेवदत्तसमवेतबोधानुकूलव्यापारानुकूलो व्यापार इत्याकारकशाब्दबोधे जाते तदनन्तरं तद्देशाधिकरणकं गमनमनिष्टसाधनमिति मानसबोधे सति गमनान्निवृत्तिर्भवति। सम्बोध्यतावच्छेदकरूपेण सम्बोध्यस्य सिद्धिमन्तरा तेन रूपेण सम्बोध्यत्वासम्भवादनुवाद्य एव सम्बोधनविभक्तिः। तथाचोद्देश्यस्य सम्बोधनान्तार्थतया तस्य विधेयभूतायां क्रियायामन्वयः।

सम्बोध्यतावच्छेदकरूपेण यत्र सम्बोध्यस्य सिद्धत्वन्तत्रैव सम्बोधनविभक्तिरित्यङ्गीकारादेव—राजत्वस्यासिद्धौ 'राजा भव युद्धयस्व, सिद्धौ च 'राजन् युद्धयस्व' इत्यनयोर्व्यवस्थया प्रयोगः सम्पद्यते। एवञ्च 'राम मां पाहि ?' इत्यादौ–अभिमुखीभवद्रामाद्युद्देश्यकप्रवर्त्तनाविषयो रक्षणमिति बोधः।

न च 'व्रजानि देवदत्त! इत्यत्र व्रजने देवदत्तस्य प्रवृत्तिनिवृत्त्योरभावात्—'तत्फलं प्रवृत्तिनिवृत्ती' इत्यसङ्गतमिति वाच्यम्, तत्र जानीहीत्यध्याहारेण तत्सम्भवात्।

न च 'जानीहि' इत्यादेरध्याहारे 'एकतिङ् वाक्यम्' इति लक्षणानाक्रान्तत्वात्। तेषु निघातादीनां प्रवृत्तिर्न स्यादिति वाच्यम्, 'एकतिङ् वाक्यम्' इत्यस्य श्रूयमाणैकतिङित्यर्थेन दोषाभावात्।

न च 'व्रजानी'त्यत्र विध्यादेरसम्भवात् लोट् न स्यादिति वाच्यम्, प्राप्तकाले तत्प्राप्तेः।

सम्बोधनविभक्त्यन्तस्य विधेयभूतक्रियायामन्वयादेव 'गच्छे'त्यध्याहारे 'धिङ् मूर्खे'त्यादौ प्रथमा, अनध्याहारे द्वितीयैव भवतीति ( ग्रन्थव्याख्या )।

अत्र **प्राचीनाः**—स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वं सम्बोधनविभक्तेरर्थः। तदेकदेशे—उद्देश्यतायां रामादेः स्वप्रकृत्यर्थस्यान्वयः। तादृशसम्बोधनविभक्त्यर्थस्य च क्रियायामन्वयः रामादेश्च क्रियाविशेषणीभूते 'आख्यातार्थे आश्रयेऽपि—अभेदेन धर्मिपारतन्त्र्येणान्वयः। तथा च प्रातिपदिकार्थमात्रे वर्त्तमानात्सम्बोधनवाचिनी प्रथमेति सूत्रार्थः। स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वञ्च प्रातिपदिकार्थ एव। स च पदार्थोऽपि क्रियायां संसर्गतया भासते। एवञ्च—रामस्य धर्मिपारतन्त्र्येण क्रियायां स्वोद्देश्यकेच्छाविषयीभूतबोधविषयत्वसम्बन्धेन, तद्विशेषणे आख्यातार्थीभूते—आश्रये चाभेदेनान्वयात्—'राम! मां पाही'त्यादौ 'रामाभिन्नाश्रयवृत्तिः—रामोद्देश्यकेच्छाविषयीभूतबोधविषयो मत्कर्मकं रक्षण'मिति बोधः। 'राजा भव युद्धयस्वे'ति तात्पर्येण 'राजन् युद्धयस्वे'ति न प्रयोगः राजत्वस्यासिद्धत्वेनेच्छोद्देश्यत्वासम्भवात्। 'व्रजानि देवदत्ते'त्यत्र तु 'जानीहि' इत्यध्याहारं विनापि—'देवदत्तोद्देश्यकेच्छाविषयीभूतबोधविषयो मत्कर्तृकं व्रजन'मिति बोधस्य निर्वाहतया—'जानीही'त्यध्याहारं विनापि तस्य साधुत्वमित्याहुः।

**नवीनास्तु**—प्रकृतवाक्यजन्यबोधाश्रयत्वप्रकारकेच्छोद्देश्यरामैतदुभयत्र रामादिप्रातिपदिकस्य खण्डशः शक्तिः, उद्देश्यस्य रामादावभेदान्वयः, रामादेश्च क्रियाविशेषणीभूते तिवर्थे आश्रयेऽभेदेनान्वयः। क्रियायाञ्च स्वोद्देश्यकप्रवर्त्तनाविषयत्वसम्बन्धेन रामादेरन्वयः। प्रवर्त्तना च 'मत्कर्मकरक्षणे रामं प्रवर्त्तयानी'त्याकारिका प्रवृत्त्यनुकूला कृतिः। रक्षणे च फलताख्या कृतिविषयता। क्वचिच्च—स्वोद्देश्यकनिवर्त्तनाविषयत्वसम्बन्धेन रामादेः क्रियायामन्वयः। एवञ्च—'व्रजानि देवदत्ते'त्यादौ मत्कर्तृकगमने देवदत्तोद्देश्यकप्रवर्त्तनाविषयत्वस्य बाधितत्वाज्जानीहीत्यध्याहारेणैव बोधः। एवञ्च—सम्बोधनविभक्त्यन्तप्रयोगात्मकस्य स्वजन्यबोधाश्रयत्वेनेच्छोद्देश्यत्वबोधकव्यापारस्य प्रवृत्तिर्निवृत्तिर्वा फलं यत्र न सम्भवति, तत्र सम्बोधनविभक्त्यन्तप्रयोगोऽसाधुरेवेति फलितम्। अत एव 'राजा भव युद्धयस्वे'त्यत्र न सम्बोधनविभक्तिः। तादृशोद्देश्यत्वमेवाभिमुखीभवनम्। तादृशोद्देश्यत्वबोधकसम्बोधनविभक्त्यन्तशब्दप्रयोगात्मको व्यापार एवाभिमुखीकरणमित्युदैरिरन्।

केचित्तु—'बोधनाय सम्मुखीकरणं सम्बोधनम्' इति व्युत्पत्त्या सम्बोध्यनिष्ठाभिमुखीभावरूपव्यापारानुकूलेच्छारूपो व्यापारः सम्बोधकनिष्ठो विभक्त्यर्थः, तस्य च विषयतासम्बन्धेन 'सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्' इत्युक्तेः, श्रुतत्वाच्च श्रूयमाणव्रजनादिक्रियायामेवान्वयः। विभक्त्यर्थे च प्रकृत्यर्थस्य वृत्तित्वेनान्वयः। तथा च 'व्रजानि देवदत्त! इत्यत्र निघातः सिद्ध्यति। अध्याहृतक्रियान्वये तु क्रियाविशिष्टप्रकारताप्रयोजकत्वरूपैकवाक्यत्वाभावात् स न स्यात्। वै० स्वनिष्ठविशेष्यतानिरूपितत्व—स्वनिष्ठविशेष्यतानिरूपितत्वविशिष्टप्रकारत्वावच्छिन्नविशेष्यतानिरूपितत्वान्यतरसम्बन्धेन। उद्देश्यविधेयभावस्तु न सम्बोधनम्' 'सम्बोधनं न वाक्यार्थ, इति हर्युक्तेरिति **प्राचीनाः।**

**नवीनास्तु**—सम्बोध्यनिष्ठोऽभिमुखीभाव एव सम्बोधनम्, सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः' इति हर्य्युक्तेः। तस्याश्रयत्वसम्बन्धेन प्रकृत्यर्थेऽन्वयः, प्राप्ताभिमुख्योह्यर्थात्मा' इति हरिवचनात्। प्रकृत्यर्थस्य च स्वोद्देश्यकत्वसम्बन्धेन प्रवर्त्तनायामन्वयः। न च 'क्रियासु विनियुज्यते, इत्युक्त्या सम्बोधनपदं यच्च तत्क्रियायां विशेषणमित्युक्त्या च विरोधः, प्रवर्त्तनान्वयद्वाराऽन्वय एव तत्तात्पर्यात्। नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयस्याव्युत्पन्नत्वात्। अत एव 'तण्डुलं पचति' इत्यर्थे 'तण्डुलः पचति' इत्यस्य न साधुत्वम्। क्रियासु विनियुज्यते' इत्युक्तेः विधेयप्रवर्त्तनायाश्च विषयत्वसम्बन्धेन क्रियायामन्वयस्तथा च 'व्रजानि देवदत्त! इत्यत्र 'जानीहि' इति शेषः। 'राम मां पाहि' इत्यनेन—अभिमुखीभवद्रामावृद्देश्यकप्रवर्त्तनाविषयो मत्कर्मकं त्वत्कर्तृकं रक्षणम् इति बोधः। एकवाक्यत्वञ्च—साक्षात्परम्परासाधारणाख्यातार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकत्वरूपमित्याहुरित्याचक्षत इति दिक्।

**६५ प्र०—'कर्त्तु'रिति सूत्रे तमपः प्रयोजनं प्रदर्श्य काशीं गच्छति न प्रयाग'मित्यादिनञ्घटितवाक्ये प्रयागादेः कर्मत्वं समर्थ्य कर्मलक्षणे प्रयोज्यत्वनिवेशस्य फलं प्रतिपादयत।**

**उ०—अयमाशयः**—'कर्त्तु'रिति सूत्रे तमपोऽभावे 'कर्त्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयत्वप्रकारकेच्छोद्देश्यं कर्मे'ति सूत्रार्थापत्तौ वारयतेः—संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारार्थकतया 'अग्नेर्माणवकं वारयती'त्यादावग्नेरपि कर्त्तृवृत्तिव्यापारवाचकधातूपात्तसंयोगरूपफलाश्रयत्वेन कर्मत्वप्राप्त्या निरवकाशतयाऽपवादभूतेन 'वारणार्थाना'मित्यनेन 'कर्त्तु'रित्यस्य बाधापत्त्या माणवकस्याप्यपादानत्वा-

-पत्तिर्दुर्वारा स्यात्, न चाग्ने माणवकं वारयतीत्यत्राग्नेः कर्तृवृत्तिव्यापारवाचकधातूपात्तफलाश्रयत्वेऽपि कर्तृवृत्तीच्छोद्देश्यत्वाभावात् 'कर्तु'रित्यस्याप्राप्त्या तत्र 'वारणार्थाना'मित्यस्य चारितार्थ्यान्माणवकस्यानेन परत्वात्कर्मसंज्ञयाभीष्टसिद्धौ तमब्ग्रहणं व्यर्थमिति वाच्यम्' तमब्ग्रहणाभावे समभिव्याहृतधात्वर्थ-प्रधानव्यापार-वाचकधातूपात्तफलाश्रयत्वरूपेप्सिततमवत्क्रियायुक्ततया 'तथायुक्त' मित्यनेनाग्नेः कर्मत्वप्राप्त्याऽन्यतरत्वावच्छिन्नव्यापकतामादाय 'वारणार्थाना'मित्यनेन 'कर्तु'रिति 'तथायुक्तं'त्यनयोर्बाधापत्त्या माणवकस्याप्यपादानत्वापत्तेरित्याशयात्। यत्र तु कर्तृवृत्तीच्छोद्देश्यत्वमग्नेरस्ति तत्र 'कर्तु'रिति सूत्रेण कर्मत्वप्राप्तिरग्नेरस्ति। तमब्ग्रहणे तु—प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेनेच्छोद्देश्यत्वस्य—तादृशफलाश्रयरूपेप्सिततमवत्क्रियायुक्तत्वस्य च स्वीकारेण न कोऽपि दोषः।

ननु 'काशीं गच्छति न प्रयाग' मित्यादौ कर्तृवृत्तीच्छाया अभावेन कर्मविधायकसूत्रस्याप्राप्त्या प्रयागादेः कथं कर्मत्वमिति चेत् ?—

अत्र केचित्—नञ्समभिव्याहारे फलाभावानुकूलो व्यापारो धातोरर्थः। नञ् पदं द्योतकत्वेन—तात्पर्यग्राहकम्। तथा च प्रकृते गम्धातोः संयोगाभावानुकूलव्यापारार्थकतास्वीकारेण संयोगाभावरूपफलाश्रयत्वात्प्रयागादेः कर्मत्वमित्याहुः, तन्न युक्तम्। असमस्तनञः क्रियाभावबोधकत्वेनैव साधुत्वस्य—'साधुत्वमष्टकस्यास्य क्रिययैवावधार्यता'मित्यनेन बोधितत्वात्, संयोगाभावबोधने युक्तिविरहाच्च। प्रयागादेः कर्मत्वोपपत्तिस्तु फलाश्रयत्वप्रकारकेच्छीयोद्देश्यतां प्रयागादावारोप्य कर्त्तव्येति सिद्धान्तः।

कर्मलक्षणे प्रयोज्यत्वमनिवेश्य जन्यत्वनिवेशे 'गां पयो दोग्धी'त्यादौ पयोनिष्ठविभागस्य प्रधानीभूतव्यापाराजन्यत्वात्पयसः कर्मत्वं न स्यात्। तन्निवेशे तु प्रयोज्यत्वं साक्षात्परम्परासाधारणमिति, विभागानुकूलव्यापारानुकूलव्यापारार्थकदुहियोगे पयोनिष्ठविभागस्य प्रधानीभूतव्यापारप्रयोज्यत्वेन कर्मत्वं सिद्ध्यतीति दिक्।

**१६ प्र०—'कर्तु'रिति सूत्रे 'क्तप्रत्ययोपात्तवर्त्तमानत्वन्तु नेह विवक्षितमिति नागेशः' केनाभिप्रायेणोत्थितोऽयं ग्रन्थः ? तदविवक्षणे च कथं षष्ठ्युपपत्तिः ? इति स्पष्टं प्रतिपाद्य कर्मलक्षणे प्रकृतेति पदद्वयनिवेशप्रयोजनं दर्शनीयम्।**

**उ०—अयं भावः**—क्तार्थवर्त्तमानत्वस्येच्छायामन्वयात् पाणिनिकर्तृकेप्सधातूच्चारणकालिकेच्छोद्देश्यस्यैव कर्मत्वप्राप्त्या साम्प्रतं तण्डुलं पचतीत्यादेरसिद्धिः,

अतो वर्त्तमानत्वस्येहाविवक्षा नागेशेन प्रदर्शिता। ननु वर्त्तमानत्वस्याविवक्षणे वर्त्तमानकालविषयकबोधजनकत्वप्रकारकतात्पर्यीयविशेष्यतावत्तान्तयोगे षष्ठीत्यर्थकेन 'क्तस्य च वर्त्तमाने' इत्यनेन षष्ठ्यनापत्तिरिति चेन्न, कर्मपदशक्यतावच्छेदककोटिप्रविष्टेच्छाविशेषणतया वर्त्तमानत्वं न विवक्षितमित्यत्रैव 'वर्त्तमानत्वन्तु नेह विवक्षित'मित्यस्य तात्पर्यात्। तथा च कर्मपदशक्तिग्राहककर्त्तुरिति सूत्ररूपवाक्यजन्यबोधविषयतावच्छेदकतया वर्त्तमानत्वस्य विवक्षासत्त्वेन षष्ठी सिद्ध्यतीति। न च कर्मपदशक्यतानवच्छेदकत्वे तन्निष्ठशक्तिग्राहकवाक्यजन्यबोधीयविषयत्वानापत्तिः, 'घटपदं घटत्वावच्छिन्नविषयकबोधजनकतावत्' इति वाक्यजन्यबोधीयविषयतावत्वेऽपि बोधादेर्घटवदशक्यतानवच्छेदकत्वदर्शनात्। एवञ्च शक्तिग्राहकवाक्यजन्यबोधीयविषताश्रयस्य शक्यत्वं भवत्येवेति नियमाभाव इति भावः।

कर्मलक्षणे—व्यापारे प्रकृतधात्वर्थेति विशेषणानुपादाने 'माषेष्वश्वं बध्नाती'त्यत्र गलाधःसंयोगरूपफलाश्रयतया माषस्य कर्मत्वापत्तिः। तदुपादाने तु गलाधःसंयोगस्य बन्धधात्वर्थव्यापारप्रयोज्यत्वाभावेन न दोषः।

नन्विदं फलं न सम्भवति, प्रयागात्काशीं गच्छतीत्यत्र प्रयागस्य कर्मत्ववारणाय फले प्रकृतधात्वर्थनिवेशस्यावश्यकतया तेनैव माषस्य कर्मत्ववारणसम्भवात्। न हि माषः प्रकृतधात्वर्थबन्धनाश्रय इति चेन्न, 'अग्नेर्माणवकं वारयती'त्यत्रान्यधात्वर्थव्यापारप्रयोज्यसंयोगाश्रयत्वेनाग्नेः कर्मत्वापत्तौ—अपादानस्य निरवकाशत्वेन माणवकस्य कर्मत्वासिद्धेः। तन्निवेशे तु संयोगस्य प्रकृतधात्वर्थप्रधानीभूतव्यापाराप्रयोज्यत्वेन कर्मत्वाप्राप्तौ—अपादानस्य सावकाशत्वमिति विभावनीयम्। फले प्रकृतधात्वर्थेति विशेषणानुपादाने काशीं गच्छति चैत्रे प्रयागं गच्छतीति प्रयोगापत्तिः, गम्धात्वर्थव्यापारस्य प्रयोज्यो यथा काशीसंयोगस्तथा प्रयागविभागोऽपि तदाश्रयत्वेनेच्छोद्देश्यत्वस्यापि प्रयागे सत्त्वात्। तदुपादाने तु विभागस्य गम्धातुवाच्यत्वाभावान् न तदापत्तिरिति दिक्।

**६७ प्र०—'अनभिहिते' इत्यधिकारसूत्रप्रयोजनमुपदर्श्य शेखरोक्तदिशा तत्प्रत्याख्यानप्रकारश्चोपवर्ण्य परिगणनवाक्ये 'प्रायेणे'ति पदप्रवेशप्रयोजनं चिन्तनीयम्।**

उ०—**अयमाशयः**—'कर्मणि द्वितीये'त्यादीनां 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचन'मित्यनयोश्चैकवाक्यतया कर्मणि यदेकत्वं द्वित्वं बहुत्वं वा तत्रैक-

द्विवहुवचनानीति लभ्यते। तत्र 'अनभिहिते' इत्यारम्भेऽनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयेत्येवमर्थो भवति।

एवञ्च 'कृतः कट' इत्यादौ क्तेन कर्मण उक्ततयाऽनभिहितकर्मगतैकत्वादेरभावेन द्वितीया न भवति। अधिकारसूत्राभावे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थेन 'कृतः कट' इत्यादौ कर्ममात्रोक्तावपि तदेकत्वानुक्ततया द्वितीयैकवचनं दुर्वारं स्यात्। न च निरवकाशतया तत्र प्रथमैव भविष्यति, नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽस्तिक्रियाया अनावश्यकत्वेन तत्र प्रथमायाः सावकाशत्वात्। नापि तत्र परत्वात्प्रथमैव भविष्यतीति वाच्यं, 'कर्त्तव्यः कट' इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसंगात्। एवञ्च संख्याविभक्त्यर्थ इति पक्षे 'अनभिहिते' इत्यारब्धव्यम्।

यदा तु 'कारकं विभक्त्यर्थ' इति पक्षमाश्रित्य 'कर्मणी'त्यादे 'द्व्येकयो' रित्यादेश्चैकवाक्यतायामेकत्वविशिष्टे कर्मणि बुबोधयिषिते द्वितीया भवतीत्यर्थो विधीयते तदा—अर्थनिवन्धनकार्यविषये प्रधानाप्रधानयोरिति न्यायेन प्रधानार्थस्योक्तत्वेन 'उक्तार्थानामप्रयोग' इति न्यायप्रवृत्तेः कर्मत्वरूपार्थस्य प्रधानत्वात्तस्यान्येनाभिधाने तद्बोधिकाया द्वितीयाया अप्राप्त्या 'अनभिहिते' इति सूत्रं व्यर्थम्। न चोक्ताधिकाराभावे 'उक्तार्थाना'मिति न्यायेन 'कृतः कट' इत्यादौ न दोषवारणं 'द्वौ ब्राह्मणौ' इत्यादौ द्योतकवाचकयोः 'व्यतिलुनीते' इत्यत्र च द्योतकयोः समुच्चयस्य दृष्टत्वेन न्यायस्य व्यभिचरितत्वादिति वाच्यम्, एवमपि लक्ष्यानुसारादुक्तार्थानामिति न्यायानुसरणस्यैव युक्तत्वात्। न च द्योतकविषये न्यायस्य व्यभिचरितत्वेन प्रकृते तत्प्रवृत्तिर्न युक्तिसहेति वाच्यम्, 'अधिपरी'ति सूत्रभाष्यप्रमाण्येन द्योतकविषयेऽपि न्यायप्रवृत्तेरङ्गीकारात्। तत्र हि—अध्यागच्छतीत्यादावागच्छतीत्यतोऽनधिकार्थयोरधिपर्योः प्रयोगस्योक्तार्थानामिति न्यायेनाभावमाशङ्क्य 'अपूपौ द्वौ' इत्यादावुक्तार्थानां प्रयोगदर्शनेन समाधानं कृतम्' एवञ्च स्पष्टमेवानेन भाष्येण द्योतकविषयेऽपि तन्न्यायप्रवृत्तिरुपलभ्यते।

द्योतकविषयेऽपि तन्न्यायप्रवृत्तेरेव 'द्विदशा' इत्यादौ समासेन सुजर्थस्योक्तत्वाच्च सुजित्यादिभाष्यं सङ्गच्छत इति।

परिगणनवाक्ये 'प्रायेणे'त्युपादानन्तु क्वचिन्निपातेनाभिधानेऽपि द्वितीया न भवति, किन्तु प्रथमैवेति बोधनार्थम्, तथा च 'विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतमित्यादौ वृक्षस्य कर्मणो निपातेनाभिहितत्वाद्द्वितीया न भवतीति फलम्।

वस्तुतस्तु—'छेत्तु'मिति तुमुन्नन्तं दुर्लभम्। 'कृष्णं द्रष्टुं याती'त्यत्रैव क्रियार्थ-क्रियोपपदत्वाभावेन 'तुमुण्ण्वुलौ क्रियायां क्रियार्थाया' मित्यस्याप्रवृत्तेः। शकधृषे'-त्यादिनापि तुमुन्न, शकादियोगाभावात्। किन्तु 'इच्छार्थेषु' इत्यनुवृत्तौ 'समान-कर्तृकेषु तुमुन्' इति तुमुन्। अक्रियार्थोपपदत्वेऽपि तस्य प्रवृत्तेः। एवञ्च तुमुनः साधुत्वायेष्यते' इत्यध्याहारः परमावश्यकः। 'वृषवृक्षोऽपि सम्वद्धर्य छेत्तुमिष्यत इति यत्तदसाम्प्रतम् = अयुक्तमित्यर्थः। एवञ्चात्रापि तिङाभिहितत्वादेव द्वितीया-निवारणसम्भवात्परिगणनवाक्ये 'प्रायेणे'त्युक्तिर्विफलैव। एवम्—'असुं नारद इत्य-बोधि सः, इत्यादौ 'नारद इती'ति कृष्णीयज्ञानविषयबोधकः शब्दः। [शब्दजन्य-बोधविषयको बोध इति तात्पर्यम्।] तथा च 'नारद इती'त्यस्य नारद इत्येतच्छ-ब्दजन्यबोधविषयार्थत्वेन विशिष्टार्थस्य कर्मत्वेऽपि तद्बोधकस्याप्रातिपदिकत्वादेव द्वितीयावारणसम्भवे नेदमपि फलमित्यनुसन्धेयमिति दिक्।

**१८ प्र०—तिङादिपरिगणनप्रत्युदाहरणं शत्य इत्यादि निरस्य प्रत्यु-दाहरणान्तरञ्चोपपाद्य तन्निरासमुखेन तत्र विषये सप्रमाणं नव्यसिद्धा-न्तप्रदर्शनपुरस्सरं 'अनभिहिते' इत्यस्योपयोगो दर्शनीयः।**

**उ०—अयं भावः**—कर्मादिपदानामिव तद्धितादेरपि विभक्तिवाच्यतावच्छेद-कविलक्षणोद्भूतशक्तिरूपपुरस्कारेण कर्मादिभासकत्वसामर्थ्यविरहात्—शत्यादिपदा-दुक्तविलक्षणरूपपुरस्कारेण बोधकताशीलानां द्वितीयादीनामापत्तिर्भवितुं नार्हतीति—चित्रगुशब्दादौपगवशब्दाच्च चित्रगवीनिष्ठस्वत्वनिरूपकत्वस्य, उपगुनिरूपितापत्य-त्वान्वयिनिरूपितत्वस्य च बोधिका षष्ठी नोत्पद्यते—इत्यनभिहिताधिकारफलम्। तथा च तयोरेव परिगणनप्रत्युदाहरणत्वं युक्तम्।

तथा हि—चित्रगव्युपगुनिरूपितः सम्बन्धः पदार्थः सन्नपि तत्पदजन्यबोधे-संसर्गतयैव भासते, संसर्गतया स्वार्थबोधकषष्ठ्यर्थ एव तद्धितबहुव्रीह्योर्विधानात्। प्रातिपदिकार्थसूत्रे च तत्पदजन्यबोधे प्रकारतया भासमानस्यैव प्रवृत्तिनिमित्ततदा-श्रयान्यतरस्य प्रातिपदिकार्थशब्देन ग्रहणम्। 'शेषे षष्ठी'त्यत्र च शेषपदेनोपयुक्ता-दन्यो गृह्यते। एवञ्च प्रथमाप्रवृत्तावुपयुक्तो यः प्रवृत्तिनिमित्तादिस्तदितरोऽत्र शेष-पदार्थ इति लब्धम्। तत्त्वञ्च चित्रगव्युपगुसम्बन्धादेः स्पष्टमेवेति तदर्थे षष्ठी दुर्वारैव। तदधिकारे तु तदर्थस्य प्रकृत्यैवोक्तत्वान्न तदर्थे षष्ठीति।

वस्तुतस्तु—'कटं भीष्म'मिति परिगणनफलं सम्पाद्य तत्प्रत्याख्यातुम्, 'अशे-षत्वान्नात्र शेषलक्षणा षष्ठी' अन्यानभिहितकर्मादीनामभावाच्च नान्या'—इत्या-

शङ्कय—'न केवला प्रकृति'रिति समाहितम् ? न चान्योत्पद्यमाना-एनमभिसम्बन्ध-मुत्सहते वक्तुमिति कृत्वा द्वितीया' इत्युक्तं भाष्ये।

एवञ्चैतेन भाष्येण संसर्गतया भासमानं कर्मत्वाद्युपयुक्तत्वेनैव स्वीकृतमिति प्रथमायामपि—संसर्गतया भासमानमपि स्वत्वादि-उपयुक्ततयैव ग्राह्यमिति शेषत्वस्य तत्र विरहादेव षष्ठ्यप्राप्त्या नानयोरपि प्रत्युदाहरणत्वमुचितमिति ध्येयम्।

नन्वेवं शत्य इत्यादौ तादृशेऽर्थे द्वितीयाया अप्रवृत्तावपि तद्धितार्थक्रयादौ-कारकान्तरस्य 'देवदत्तेन' 'काश्या'मित्यादेरन्वयापत्तिर्दुर्वारैवेति 'देवदत्तेन शत्योऽश्व' इत्याद्यापत्तेरिति चेत्—

अत्र **शेखरकृतः**—'शत्य' इत्यादौ कारकान्वययोग्यतावच्छेदकसाध्यत्वेन न क्रयादेर्भानम्, कारकान्वययोग्या क्रिया धातूपस्थितैव, नतु तद्धितशक्त्योपस्थिता। तथा च 'शत्योऽश्वो देवदत्तेन' इति न प्रयोगः।

एवं प्राचीनमते 'प्राप्तानन्द' इत्यादौ यत्कर्मकप्राप्तिकर्त्तानन्द इति विग्रहतो बोधे—आनन्दकर्त्तृकप्राप्तिकर्मेति बोधे विशेष्यविशेषणभावव्यत्यासेनैकार्थीभावकल्पनं वृत्तिविग्रहयोः समानार्थत्वभङ्गः—तथा सति, 'प्राप्तभार्य' इत्यादौ पूर्वोत्तरपदयोरेकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्यविरहात् पुंवत्त्वानापत्तिश्च प्राप्नोतीति 'कालाः परिमाणिना' इत्यादिसूत्रभाष्योक्तस्य वृत्तिविग्रहयोः समानार्थत्वस्य निर्वाहार्थं वृत्तिविग्रहयोः प्राप्तिकर्त्रानन्दकर्मेत्येव बोधोऽङ्गीकार्यः।

यद्यप्यत्र—प्राप्तिकर्त्रभिन्नानन्दनिरूपितकर्मत्वं यत्पदार्थे पुरुषे बाधितं तथापि 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसङ्क्रामतः' इति न्यायेन-आनन्दविशेषणीभूत-प्राप्ति-निरूपितं तदत्र बोध्यम्।

एवञ्च—शत्येत्यादितद्धितान्तात्, प्राप्तानन्द, इत्यादिसमासाच्च, कारकान्वययोग्यतावच्छेदकसाध्यत्वेन क्रियायाः, क्रियाजनकत्वेन कारकस्य च भानाभावात् कारकविभक्त्यप्रसक्त्या तद्वारणायानभिहिताधिकारो नावश्यकः।

अत्र प्रमाणन्तु—'गतिकारकोपपदा'दिति सूत्रस्थकैयट एव। तत्र हि—गतिकारकोपपदादिति किमर्थम् ?—'परमं कारकं परमकारक'मिति प्रतीकमुपादाय 'यथा सम्प्रदानादयः शब्दा न कारकरूपतां प्रतिपादयन्ति' तथा कारकशब्दोऽपीति। कृदन्ता हि क्रियायोग्यताविशिष्टद्रव्यवाचिनो न तूद्भूतां कारकशक्तिं प्रतिपादयन्तीत्युक्तम्।

तथा च स्पष्टमेवानेन तस्योद्भूतकर्मत्वे शक्तिमत्त्वेन भानाभावो बोध्यते।

एवञ्च—'तिङ्कृत्तद्धितसमासैरभिधाने' इत्यस्य तैरभिधाने तत्तच्छक्त्यावेशेन न भानमिति विभक्त्यप्रसक्तिरित्यर्थः। अत्रैव—'अनभिहिते' इति तात्पर्यग्राहकम्।

अत्र प्रमाणन्तु—'सुप आत्मनः' इति सूत्रभाष्यमेव। तत्र हि—'इष्टः पुत्रः' 'इष्यते पुत्रः' इत्यर्थे क्यचमाशङ्क्य 'स्वशब्देनोक्तत्वान्ने'ति समाहितम्। कर्मवाचकशब्देन—इष्ट इत्यत्र क्तप्रत्ययेन, इष्यत इत्यत्र च यक्समभिव्याहृतात्मनेपदेन चोक्तत्वादित्यर्थः। 'सुप आत्मन' इत्यस्य कर्मत्वविशिष्टबोधकसुबन्तादित्यर्थः। वस्तुतस्तु—कर्मत्वविशिष्टो योऽर्थस्तद्बोधकादित्यर्थे—इह भवन्तस्तावदाहुर्भवितव्यमिति किं कारणं समानार्थेन वाक्येन भवितव्यं प्रत्ययान्तेन च यश्चेहार्थो वाक्येन गम्यते 'इष्टः पुत्रः' इष्यते पुत्र' इति नासौ जातु कदाचित् प्रत्ययान्तेन गम्यते इति समाधानान्तरमुक्तम्। वाक्ये फलं विशेष्यं वृत्तौ व्यापार इति समानार्थत्वाभावात्तत्रार्थेनवृत्तिः एवञ्च सति सम्भवे वृत्तिविग्रहयोरर्थसाम्यं विशेषणविशेष्यभावसाम्यञ्च सुस्पष्टमेवानेन लभ्यते इत्याहुरिति दिक्।

**६६ प्र०—तथायुक्तञ्चानीप्सित'मिति सूत्रं शेखरकृता कथं व्याख्यातमिति साधूपपाद्यताम्।**

**उ०—अयं भावः**—तथायुक्तत्वमत्र 'समभिव्याहृतधात्वर्थप्रधानव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वरूपम्। 'अनीप्सिते'ति नञा पूर्वसूत्रे सन्प्रत्ययक्तप्रत्ययाभ्यां लब्धस्येच्छोद्देश्यत्वस्य व्यवच्छेदेन—कर्तृवृत्ति—प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वेन विवक्षितोऽर्थः कर्मसंज्ञ इति सूत्रार्थः। 'ओदनं भुञ्जानो विषं भुङ्क्ते' इत्यत्रौदनत्वेन विषेऽपीच्छोद्देश्यत्वस्य सत्त्वेन पूर्वेणैव कर्मत्वसिद्धिरिति नैतदुदाहरणत्वं युक्तम्। यत्र तु भयादिना विषं भुङ्क्ते तत्रापि विषभोजनाद्यभावरूपादधिकसुखरूपेष्टसाधनत्वप्रकारकग्रहस्य विषभक्षणे सत्त्वात् 'कर्तुरीप्सिततम'मित्यनेनैव विषस्य कर्मत्वसिद्धिः। तदुक्तं भाष्ये—'आतश्च विषमीप्सितं यत्तद्भक्षयन्ती'ति। पूर्वसूत्रेणेप्सिततमस्य कर्मत्वं विहितम्। इदञ्च द्वेष्योदासीनसंहार्थम्। तत्र द्वेष्योदाहरणम्—चोरान् पश्यतीति। उदासीनोदाहरणम्—'ग्रामं गच्छन् तृणं स्पृशती'ति।

ननु—अनीप्सितग्रहणं व्यर्थम्, 'तथायुक्त'मित्यस्य सादृश्यार्थकथाल्घटितत्वेनेप्सिततमसदृशेत्यस्य ततो लाभेनानीप्सितस्य स्वत एव लाभात्। ईप्सिततमसदृशस्येप्सिततमस्यैव ग्रहणन्तु कर्तुं न शक्यते, तथा सत्यस्य सूत्रस्य वैयर्थ्यापत्तेरिति चेन्न। तथा सति कर्तृवृत्तिव्यापारवाचकधातुवाच्यफलाश्रयत्वेन विवक्षित-

मित्यर्थे प्रधानधात्वर्थाप्रयोज्यस्याप्यग्नेस्तथात्वेन कर्मसंज्ञायाः प्राप्तौ 'वारणार्थाना'-मिति व्यर्थमिति तस्य कर्मसंज्ञापवादत्वापत्त्याऽग्निपदादिव माणवकपदादपि पञ्चमी-प्रसङ्गात्। न चानीप्सितपदस्य न-ईप्सितमनीप्सितमिति नञ्समासनिष्पन्नतया-नञिवयुक्तन्यायादीप्सिततमवदित्यादिलाभसम्भवे 'तथायुक्त'मिति व्यर्थमिति वाच्यम्। तथा सति कर्तृवृत्तिव्यापारप्रयोज्यफलाश्रयं कर्मेत्यर्थापत्तौ 'विषेणौदनं भुङ्क्ते' इत्यादौ विषादेरपि गलाधः संयोगरूपतादृशफलाश्रयत्वात् कर्मत्त्वापत्तेः, अनी-प्सितमिति पर्युदासेन प्रकृतधात्वर्थव्यापारप्रयोज्यफलाश्रयत्वेन विवक्षितत्वेन सादृ-श्यादुक्तदोषवारणेऽपि 'प्रयागात्काशीं गच्छती'त्यत्र प्रयागस्य कर्मत्वापत्तेश्चेति दिक्।

**१०० प्र०—'अकथितञ्चे'ति सूत्रविषये प्राचीनमतमुपपाद्य तन्नि-रासमुखेन नव्यमतञ्च सप्रमाणं निरुच्यताम्।**

**उ०—अयमाशयः**—दुहादीनां विभागाद्यनुकूलव्यापारार्थकत्वेन विभाग-रूपफलाश्रयतया पय-आदेः विभागानुकूलव्यापाररूपफलाश्रयतया गवादेश्च 'कर्त्तु-रीप्सिततम'मित्यनेन कर्मत्वसिद्धावपि गवादिनिष्ठकर्मत्वस्य सम्बन्धत्वेन विवक्षायामपि षष्ठीं वाधित्वा कर्मसंज्ञायाः प्रवृत्तये 'अकथितञ्चे'ति सूत्रम्। एवञ्चैतत्सूत्रवोधित-कर्मसंज्ञावदर्थवोधकगवादिपदोत्तरद्वितीयादितः सम्बन्धत्वपुरस्कारेणैव कर्मत्वादि वो-ध्यत इति **प्राचीनाः**।

**नवीनास्तु**—अकथितशब्दोऽप्रधानवाची, असङ्कीर्त्तितवाची च। तत्र 'केना-कथितम्? अपादानादिविशेषादिभिः' इति भाष्यादत्रासङ्कीर्तितपर एव नत्वप्रधानपरो रूढः। गच्छतीत्यत्र केनेत्याकांक्षासत्त्वेऽपि गच्छतीति व्युत्पत्तिकगोपदे केनेत्याकांक्षाया अदर्शनेनैव कर्तृनिष्ठप्रधानव्यापारविशेषणफलानाश्रयरूपाप्रधानार्थकरूढाकथितपदे के-नेत्याकांक्षाया अनुत्थानाद्भाष्यासङ्गत्यापत्तेः।

किञ्चाप्रधानार्थकस्य ग्रहणे 'गोर्दोग्धि पयः' इत्यादावपादानत्वादिविवक्षाया-मपि—उक्तव्यापारविशेषणफलानाश्रयत्वरूपाप्रधानत्वस्य गवि सत्त्वेनापादानत्वाद्य-विवक्षायां चरितार्थं कर्मत्वमपादानत्वादिवाधकं स्यादिति तद्वारणायासंकीर्तितपरत्वा-श्रयणम्। तथा चापादानत्वादिविवक्षायां कर्मत्वाप्राप्त्या नापत्तिरिति भावः। असं-कीर्तितत्वञ्च—द्विधा—पूर्वविधिविषयप्रसक्तिपूर्वकापादानत्वाद्यविवक्षया, सर्वथा पूर्वविधेर-प्रसक्त्या च। तत्राद्ये गां दोग्धि पय इत्यादि। द्वितीये याचिप्रच्छिभिक्षियोगे बलिं याचते वसुधामित्यादि। पूर्वत्रापादानत्वाविवक्षायां कर्मत्वम्, तद्विवक्षायामपादान-त्वमिति 'गां दोग्धि' 'गोर्दोग्धि' इत्युभयं साधु। उत्तरत्र पूर्वविषयस्य कस्याप्यप्राप्तेः—

बलिं याचते—इत्येकमेव साधु। न चापादानत्वप्राप्तिः, विभागस्य धात्वर्थत्व एव तत्प्रवृत्तेः, याचेश्च—परस्वत्वनिवृत्तिस्वस्वत्वोत्पत्त्युभयानुकूलव्यापारार्थकत्वात्। एवञ्च—व्यापारद्वयार्थकत्वे 'कर्तुरीप्सितत'मिति सूत्रेण सिद्धावपि विभागानुकूलव्यापारमात्रस्य धात्वर्थत्वे फलतावच्छेदकसमवायात्मकसम्बन्धेन विभागरूपफलाश्रयस्य पय-आदेः पूर्वेण कर्मत्वसिद्धावपि फलतानवच्छेदकावधित्वरूपसम्बन्धेन तादृशविभागरूपफलाश्रयस्य गवादेः कर्मसंज्ञार्थमकथितसूत्रम्।

एवञ्च—'एतत्सूत्रं यदि न स्यात्तदा षष्ठीस्या'दिति सम्भावनयाऽस्य षष्ठ्यपवादत्वमाश्रित्य सम्बन्धत्वेन कर्मादिबोधकताकल्पने कर्तुरीप्सितसूत्रविहितकर्मसंज्ञावद्बोधकपदोत्तरद्वितीयाया अपि सम्बन्धार्थकतापत्तेः, षष्ठीविधायकस्य कर्मसंज्ञाविधायकस्य च विरोधाभावेन वाध्यवाधकभावाप्रसक्तेश्च प्राचीनोक्तं चिन्त्यमेव। कर्मत्वपुरस्कारेण कर्मवाचकताविधायकत्वे, सम्बन्धत्वपुरस्कारेण कर्मवाचकताविधायकत्वे च 'कर्मणि द्वितीये'त्यस्य वाक्यभेदापत्तेश्च। एकवाक्येन वैरूप्येण बोधस्याशक्यत्वात्। अत्रार्थे प्रमाणन्तु—एतत्सूत्रशेषभाष्यमेव।

तत्र हि—'कर्तुरीप्सित' 'तथायुक्ते'ति सूत्रद्वयवैयर्थ्यमाशङ्क्येप्सितमात्रस्याप्यनेन संज्ञायां 'वारणार्थाना'मिति सूत्रस्यानवकाशत्वे माणवकादपि पञ्चमी स्यादिति 'ईप्सिततम' मित्यारब्धव्यमित्युत्तरितम्। षष्ठ्यपवादतया यदीदं सम्बन्धत्वेन विवक्षायामेव प्रवर्तेत तदा कर्मत्वविवक्षायां प्रवर्तमानाभ्याङ्कर्तुरीप्सितेति तथायुक्तेति सूत्राभ्यामस्य सामानाधिकरण्याभावादेव वैयर्थ्यशङ्काया अनुत्थितौ तत्समाधानप्रयासपरकभाष्यमसङ्गतमेव स्यादित्याहुरिति दिक्।

**१०१ प्र०—अविवक्षितकर्मणामप्यकर्मकपदेनात्र शास्त्रे ग्रहणमिति मतमुपपाद्यैतद्विषये मतान्तरमुपक्षिप्य तयोर्मतयोर्युक्तायुक्तत्वसमीक्षा विधीयताम्।**

**उ०—अयमाशयः**—अविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणादेव 'कृतपूर्वी कट'मित्यत्र कर्मणोऽविवक्षयाऽकर्मकत्वेन भावे क्तप्रत्यये कृते सति कर्मविवक्षया कटं कर्म' अविवक्षितकर्मणोऽकर्मकत्वेनाग्रहणे भावे क्तप्रत्ययो नोपपद्येत। न च ततोऽन्यत्राविवक्षितकर्मकाद्भावे क्तप्रत्ययादर्शनात् प्रकृतेऽपि भाष्यप्रामाण्यादेव क्तप्रत्ययो भावे न तु कर्मणोऽविवक्षयेति वाच्यम्, तथा सति स्वसामर्थ्यादेव क्तप्रत्ययोपपत्तौ भाष्यकृद्विहितायाः कर्मणोऽविवक्षाया वैयर्थ्यापत्तेः। 'णेरणा'विति सूत्रस्थस्य लुनातेर्निवृत्तप्रेषणाण्णिचि 'लावयति केदार'मिति द्वितीयान्तस्य कैयटप्रयोगस्योपायान्तराभावाच्च। लावयतीत्यत्रार्थान्तरत्वादकर्मकत्वन्तु नोद्भाव्यम्, प्रेरणांशस्य त्यागेन तादृश-

स्यैव फलांशस्य सत्त्वात्। 'अधीगर्थे'ति सूत्रभाष्ये कर्मणः शेषत्वविवक्षयाऽकर्मकत्वे 'मातुः स्मर्यते' इत्यत्र भावे लस्य उदाहृतत्वाच्चाविवक्षितकर्माप्यकर्मकपदेन गृह्यते इति बोध्यमिति **नवीनमतम्।**

**प्राचीनास्तु**—'गतिबुद्धो'त्येव नियमस्य सजातीयविषयत्वात्—णिच्प्रकृतिकसकर्मकधातूपात्तव्यापाराश्रयस्य कर्मत्वं चेद्गत्याद्यर्थकादीनामेव धातूनां व्यापाराश्रयस्येति नियमार्थमस्तु—'आसयत्सलिले पृथ्वी'मित्यादेर्नियमानाक्रान्ततया 'कर्त्तु'रित्येव कर्मत्वसिद्धेरकर्मकग्रहणं व्यर्थं सत् देशकालादिभिन्नं कर्म येषां न सम्भवति तद्धातुबोधकम्।

एवञ्च सत्यपि देशादीनां कर्मत्वे 'मासमासयति देवदत्त'मित्यादौ कर्मत्वसिद्धिः। ज्ञापनोत्तरं चारितार्थ्यजिज्ञासा तु नास्थेया, 'मासमासयति देवदत्त'मित्यादौ सत्यकर्मकग्रहणाभावे कर्मत्वानापत्तेः, इति नियमार्थत्ववादिमते। कर्त्तृसंज्ञाबाधनार्थमिदं सूत्रं यस्य तन्मतेऽपि—धातूनामनेकार्थतया तेषां स्वार्थकरणकव्याप्त्यनुकूलव्यापारे शक्त्या सर्वत्र धातुषु देशकालादिकर्मवत्त्वस्य सत्त्वात्—येषां कर्म न विद्यते तादृशधातूनामप्रसिद्धया तदर्थकमकर्मकपदं व्यर्थमेव। अत एवोक्तं भाष्ये—न केचिद्देशकालादिभिरकर्मका इति। अनेन भाष्येणासम्भवत्कर्मको धातुरेवाकर्मकपदेन गृह्यते। अन्यथा व्याप्त्यर्थाभावे देशकालादीनां कर्मत्वाभावात्—अन्येषामसम्भवाच्च अकर्मकधातोः सम्भवेन 'न च केचिदि'त्युक्तेरसङ्गत्यापत्तेः। एवञ्च व्यर्थं सदकर्मकग्रहणं देशकालादिभिन्नसम्भवत्कर्मक एवाकर्मकपदेन गृह्यते इति ज्ञापयति। एवञ्च 'मासमासयति' इत्यादिसिद्धिरित्याहुः।

**वस्तुतस्त्वत्र** प्राचीनमतमेव ज्यायः, तथा हि—अविवक्षितकर्मणामप्यकर्मकपदेन ग्रहणमिति नव्यमतानुसरणे—अकर्मकपदस्य कर्मानन्वय्यर्थक इत्येवार्थो वक्तव्यो न त्वसम्भवत्कर्मक इति। तथा सति विवक्षास्थले तस्य कर्मसम्भवादविवक्षास्थलेऽप्यकर्मकत्वानापत्तिः।

एवञ्च न केचित् कालभावादिभिरकर्मका इति भाष्यासङ्गत्यापत्तिः। कालादीनां कर्मत्वोपयोगिव्याप्त्यर्थराहित्ये—आसूधातोरेव कर्मानन्वय्यर्थकत्वेनाकर्मकस्य सत्त्वात्।

प्राचीनमते तु व्याप्त्यर्थान्तर्भावेण—आसूधातोर्वृत्तौ मासादिकर्मसम्भवात्—असम्भवत्कर्मकत्वस्यासधातोरप्यभावान्न केचिदिति भाष्यं सङ्गच्छते। एवञ्चाकर्मक-

ग्रहणमुक्तरीत्या व्यर्थं सत् देशकालादिभिन्नासम्भवत्कर्मकमकर्मकमिति प्राचीनोक्तौ न दोषलेशोऽपीत्यनुसन्धेयमिति दिक्।

**१०२ प्र०—'गतिबुद्धी'ति सूत्रे प्राङ्नव्ययोर्मते सम्यगुपपाद्य निर्दोषनियमाकारो दर्शनीयः।**

**उ०—अयंभावः**—'गमयति देवदत्तं यज्ञदत्त' इत्यादौ ण्यन्तगमिधातोः संयोगानुकूलव्यापारानुकूलव्यापारार्थकतया प्रधानीभूतव्यापारप्रयोज्य—संयोगानुकूलव्यापारात्मक—फलाश्रयत्वेनेच्छोद्देश्यतया 'कर्त्तु'रित्यनेन देवदत्तादेः कर्मसंज्ञा, गम्धातूपात्तव्यापाराश्रयत्वेन कर्त्तृसंज्ञा च प्राप्नोति, तत्र **परत्वात्**, कर्मसंज्ञायाः द्वितीयव्यापारसापेक्षत्वेन तदपेक्षया तदनपेक्षकर्त्तृसंज्ञाया **अन्तरङ्गत्वात्**, कर्त्तृवृत्तिव्यापारप्रयोज्यफलाश्रयस्य कर्मसंज्ञाविधानेन कर्त्तृसंज्ञां विना कर्मसंज्ञाया असम्भवेन कर्त्तृसंज्ञायाः कर्मसंज्ञो**पजीव्यत्वाच्च**'—देवदत्तस्य कर्मसंज्ञां वाधित्वा कर्त्तृसंज्ञैव स्यादिति ताम्बाधित्वा गत्यादिसूत्रेण ण्यन्तगत्याद्यर्थकधातुयोगे प्रयोज्यस्य कर्मसंज्ञा विधीयत इति विधायकत्वमेतत्सूत्रस्य। अत एवोक्तम्—

'परत्वादुपजीव्यत्वादन्तरङ्गतयापि च।
प्रयोज्यस्यास्तु कर्त्तृत्वं गत्यादेर्विधितौचिते'ति॥

अत एव 'आकडारादेका संज्ञे'ति सूत्रे भाष्ये 'आकडारात्परं कार्यमिति पाठे गतिबुद्ध्यादीनां ण्यन्तानां कर्म-कर्त्तृसंज्ञामपि प्राप्नोति, आरम्भसामर्थ्याच्च कर्मसंज्ञा, परङ्कार्यत्वाच्च कर्मसंज्ञा प्राप्नोति' इति दोष उक्तः। तत्रारम्भसामर्थ्या'दित्यस्य—गत्यादिसूत्रारम्भसामर्थ्यादित्यर्थः। गत्यादिसूत्रस्य नियमार्थत्वे तु—गत्याद्यतिरिक्ते 'पाचयत्योदनं देवदत्तेने'त्यादौ देवदत्तादेः 'कर्त्तु'रिति प्राप्त' कर्मसंज्ञाव्यावृत्त्यर्थं गत्यादिसूत्रस्य चरितार्थतया 'आरम्भसामर्थ्या'दित्यसङ्गतं स्यात्। यद्यपि शाब्दबोधीयविशेष्यताश्रयत्वरूपं शाब्दं प्राधान्यं णिजर्थव्यापारस्यैवास्ति तदनुरोधि कर्मसंज्ञाया अपि प्राधान्यात्प्रधानकार्यस्य सर्वतो वलवत्त्वादन्तरङ्गोपजीव्यामपि कर्त्तृसंज्ञाम्प्रति वाधकत्वेन कर्मसंज्ञैव स्यादिति गतिबुद्धिसूत्रं व्यर्थं सन्नियमार्थमेवेति प्राप्तन्तथापि शाब्दप्राधान्यापेक्षयोद्देश्यत्वलक्षणस्यार्थप्राधान्यस्यैवाकडारसूत्रस्थभाष्यप्रामाण्याल्लोकव्यवहाराच्च प्रावल्यमित्यभ्युपेयते।

तथा च प्रयोज्यव्यापारस्यैवोद्देश्यत्वेन प्राधान्यात्तदनुरोधिकर्त्तृत्वस्यैव प्राधान्यमपीति विध्यर्थमेव गतिबुद्धीति सूत्रमिति **प्राचीनाः।**

**नवीनास्तु**—शाब्दबोधीयविशेष्यताश्रयत्वलक्षणस्य शाब्दप्राधान्यस्य, अ-

न्यानधीनत्वलक्षणस्यार्थप्राधान्यस्य च णिजर्थव्यापार एव सत्त्वेन तत्सापेक्षकर्मसंज्ञायाः प्राधान्यात्प्राबल्येन कर्मसंज्ञायाः सिद्धेः, हेतुमतिचे'ति सूत्रभाष्ये 'एतेषामेव ण्यन्तानां यः कर्त्ता स णौ कर्मसंज्ञो भवति नान्येषा'मित्युक्तेश्च नियमार्थत्वमेव गत्यादिसूत्रस्य ।

आकडारसूत्रभाष्ये च—'आरम्भसामर्थ्या'दित्यस्य नियमार्थकगत्यादिसूत्रारम्भसामर्थ्यादित्येवार्थः । ण्यन्तविषयक—'कर्त्तु'रिति सूत्रारम्भसामर्थ्यादित्येव वाऽर्थ इति न तद्विरोधः । अत एव—

'गुणक्रियायां स्वातन्त्र्यात्प्रेषणे कर्मताङ्गतः ।
नियमात्कर्मसंज्ञायाः स्वधर्मेणाभिधीयते' ॥

इति हरिकारिकायां 'नियमा'दित्युक्तम् । तथा च णिजर्थव्यापारजन्यफलाश्रयस्य कर्मत्वञ्चेत्तदा गत्याद्यर्थकणिजन्तधातूपात्तव्यापारजन्यफलाश्रयस्यैव नान्यस्येति नियमाकारः, 'कर्त्तु'रिति सूत्रे णिजर्थव्यापारजन्यफलाश्रयातिरिक्तस्येप्सिततमस्य ग्रहणान्न 'देवदत्तेन पाचयती'त्यादौ 'कर्मत्वमित्याहुरिति दिक् ।

**१०३ प्र०—'इत्थम्भूतलक्षण' इति कैयटेन किमभिहितम्? तच्च शेखरकृता कथं खण्डितम्? तत्खण्डनं युक्तं नवा? इति विवेचनीयम् ।**

**उ०—अयमाशयः**—इत्थम्भूतस्य यत्र शक्त्या लक्षणवाचकशब्दजन्योपस्थित्यविषयत्वं तत्रैव तृतीया । तेन 'कमण्डलुपाणिं छात्रमद्राक्षी'दित्यत्र—कमण्डलुः पाणौ यस्येति बहुव्रीहिणा—कमण्डलुयुक्तपाणिविशिष्टस्य तस्य विशेषणतया कमण्डलुबोधकत्वात् तेनापि छात्रस्येत्थम्भूतस्योपस्थितेः सत्त्वान्न कमण्डलुपदात्तृतीया भवति । नन्विदं पृथगुपस्थितेः फलं न युक्तम्, समासे कृतेऽप्युत्पन्नायास्तृतीयायाः समासमध्यपतितत्वेन तन्मध्यपतितन्यायेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणात् 'सुपो धातु' इति लुक्प्रवृत्तेरिति चेन्न, प्रकृते तन्मध्यपतितन्यायस्य प्रवृत्तेरसम्भवात् । तथा हि—जराशब्देन जनराशब्दादेर्ग्रहणापत्तिवारणाय-तद्विशिष्टत्वं तन्मध्यपतितत्वम्—वै० स्वघटकावधिकपूर्वत्व-स्वघटिकावधिकोत्तरत्व-स्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वै—तन्नितयसम्बन्धेनेत्यस्यैव स्वीकार्यतया-प्रकृते कमण्डलुपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयीभूतायास्तृतीयायाः समासपर्याप्तोद्देश्यतानिरूपितविधेताश्रयत्वाभावादिति **कैयटः** ।

**शेखरकृतस्तु**—स्वयुक्तपाणिमत्त्वसम्बन्धेन यत्र यत्र कमण्डलुस्तत्र तत्र छात्रत्वमिति प्रतीत्या कमण्डलोर्लक्षणत्वसम्भवेऽपि भाष्यानभिप्रेततया तस्य लक्षण-

त्वविरहेण लक्षणत्वेनाभिप्रेतकमण्डलुपाणित्ववाचकात्कमण्डलुपाणिशब्दात्तृतीयापत्तिर्दुर्वारा। तथा हि भाष्यं—'सकृदसौ कमण्डलुपाणिश्छात्रो दृष्टस्तस्य तदेव हि लक्षणं भवती'ति। अत्र 'तदेवे'त्यस्य—कमण्डलुपाणित्वमेवेत्येवार्थो न तु कमण्डलुरित्यर्थस्तथा सति तस्य पुंस्त्वात् 'स एवे'ति वदेत्। तस्मात् कमण्डलुशब्दात्तृतीयायाः स्वत एवाप्राप्त्या—कैयटोक्तं पृथगुपस्थितिफलं न समीचीनम्। किञ्च 'तन्मध्यपतित'न्यायेन तृतीयाविशिष्टस्य समासग्रहणेन ग्रहणाल्लुक्सम्भवेनापि फलाभावः। न च 'स्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वरूपतृतीयसम्बन्धविरहान्न तन्न्यायप्रवृत्तिरिति वाच्यम्, 'नरं मन्य' इत्यत्रत्यभाष्यविरोधेन तत्सम्बन्धनिवेशस्यायुक्तत्वात्। तत्र हि—'इच एकाचोऽम्प्रत्ययवच्चे'त्यनेन नृशब्दात्खिदन्ते मन्यशब्दे उत्तरपदे परे समासोत्तरमपि तस्य स्वाद्यम्वद्भावे 'ऋतो ङी'ति गुणे 'नरम्मन्य, इति जाते 'सुपो धातुप्रातिपदिकयो'रिति लुकमाशङ्क्याम्विधिसामर्थ्यान्न लुगित्युक्तम्।

तृतीयसम्बन्धनिवेशे तु समासोत्तरजायमानस्य नृशब्दोद्देश्यकस्यामस्समासपर्याप्तोद्देश्यतानिरूपितविधेयताया अभावेन न्यायाप्रवृत्त्या लुकोऽप्राप्तौ भाष्यमसङ्गतं स्यात्। जवर्णोत्तररावर्णत्वरूपजराशब्दत्वस्य जनराशब्दे कदाप्यसत्त्वेन तत्र जरात्वानतिदेशादित्याहुः।

**वस्तुतस्तु**—'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयत्सर्वनामपर्यायेण तत्तल्लिङ्गभाग्भवती'त्यस्य भाष्य एव प्रतिपादनेन लक्षणशब्दानुरोधेन नपुंसकनिर्देशात् 'कमण्डलोर्लक्षणत्वे हि 'स एवे'ति वदेदित्युक्तिरयुक्ता। यदुक्तं 'तन्मध्यपतित' न्यायेन लुको दुर्वारत्वमिति तदपि न, तत्समुदायनिष्ठोद्देश्यतानिरूपितविधेयताश्रयस्यैव तद्ग्रहणेन ग्रहणस्य तन्न्यायेन बोधनात्। 'नरम्मन्य' इति भाष्यविरोधस्तु न, उत्तरपदस्य समासचरमावयवे रूढत्वेन 'समासचरमावयवे खिदन्ते परे' इत्यर्थेन समासत्वावच्छिन्नोद्देश्यताख्यविषयताया नृमन्यरूपसमासपर्याप्तत्वात् तन्निरूपितविधेयताया अमि सत्त्वेन दोषाभावात्। अत एव जनराशब्दे न जरस्। 'कमण्डलुपाणिपदात् कमण्डलुयुक्तपाणिरूपकमण्डलुपाणित्वविशिष्टवाचकात्तृतीयावारणाय वाचकादित्थंभूतस्य पृथगुपस्थितिरपेक्षिते'त्युक्तिरपि न समीचीना, कारकविभक्तित्वे तु बलीयस्या प्रथमया बाधात्। एवञ्च कैयटोक्तमेव युक्तमिति दिक्।

**१०४ प्र०—प्राचीनप्रणाल्या ध्रुवत्वं परिष्कृत्य तन्निरासपुरस्सरं नव्यमतेन तत्परिष्करणीयम्।**

**उ०**—ध्रु धातोः स्थैर्यार्थकात्कुटादेः पचाद्यचि निष्पन्नो ध्रुवशब्दः, तथा च—

ध्रुवं = स्थिरम्, तच्च क्रियानाश्रयः, सा च प्रत्यासत्त्या प्रकृतधातूपात्ता। एवञ्च—प्रकृतधात्वर्थप्रधानीभूतव्यापारानाश्रयत्वे सति प्रकृतधातूपात्तप्रधानीभूतव्यापारजन्यविभागाश्रयत्वं ध्रुवत्वमिति **प्राचीनाः**।

**नवीनास्तु**—एवं हि 'त्रस्तादश्वात्पतितः' 'धावतः पतितः' इत्यादौ ध्रुवत्वाभावादपादानत्वं न स्यादित्याशङ्क्य—'अध्रौव्यस्याविवक्षितत्वमत्र' यतः सतोऽप्यविवक्षा भवती'ति समाहितं भाष्ये, तदसङ्गतं स्यात्। प्राचीनोक्त—पतधात्वर्थ व्यापाराश्रयत्वरूपाध्रौव्यस्य तत्रासत्त्वेन तदविवक्षिणोक्तेरसङ्गत्यापत्तेः। लोकप्रसिद्धनिश्चलत्वरूपध्रुवपदार्थातिरिक्ते ध्रुवपदस्य शक्तिकल्पने गौरवञ्च।

तस्मादवधित्वेन विवक्षितत्वे सति—अवधिभावोपगमातिरिक्तावधिताप्रयोजकप्रकृतधात्वर्थव्यापारानाश्रयत्वं ध्रुवत्वम्। तथा च—अवधिताप्रयोजकप्रकृतधावत्रस धात्वर्थ—धावनत्रासादिरूप--व्यापाराश्रयत्वेन--'अपादानत्वं न स्यादिति शङ्का' सतोऽपि तस्याविवक्षणान्नावधिताप्रयोजकमिति समाधानञ्चे'ति न भाष्यासङ्गतिरित्याहुः।

**१०५ प्र०—'कर्त्तृकर्मणोः कृती'ति सूत्रे–कृति किम्? तद्धिते माभूदिति फक्किका शेखरोक्तदिशा विशदं वर्णनीया।**

**उ०**—ननु कर्त्तृत्वकर्मत्वयोः कारकत्वव्याप्यतया कारकत्वस्य च क्रियानिरूपितत्वात् कर्त्तृकर्मभ्यां क्रिया आक्षिप्यते, कारकान्वययोग्यतावच्छेदकरूपेण साध्यत्वेन धातुत एव क्रियोपस्थितेः क्रियावाची धातुरेव गृह्यते।

'शत्यः' आभ्रिक' इत्यादौ 'कृतपूर्वी कटम्' 'भुक्तपूर्वी ओदन'मिति विलक्षणस्थल एव 'कृती'त्यस्य प्रयोजनदर्शनपरभाष्यप्रामाण्यात्–कारकान्वयितावच्छेदकरूपेण साध्यत्वेन क्रियाया अनुपस्थितेः, तद्धितयत्प्रत्ययेनाभिहितत्वाच्च षष्ठ्यप्राप्त्या 'कर्त्तृकर्मणो'रिति सूत्रे कृद्ग्रहणं व्यर्थम्,

न चाध्यारूढमित्यर्थेऽधिकमिति सूत्रेणाधिकशब्दस्य व्युत्पादनादध्यारोहणक्रियान्वयितयाऽ'धिका खारी द्रोणेने'त्यत्र द्रोणे कर्त्तरि तृतीया भवति, यदि धातुत एव तेन रूपेणोपस्थितिः स्यात्तर्हि ततस्तृतीया न स्यात्कर्त्तृत्वस्य तत्राभावादिति वाच्यम्, द्रोणादेः कर्त्तुः कर्त्तृसंज्ञाया अभावे आरोहणजनकत्वरूपहेतुत्वसत्त्वात् हेतौ तृतीयोपपत्तेः। न च तिङ्व्यावृत्त्यर्थं तदिति वाच्यम्, ओदनं पचती'त्यादौ न 'लोके'ति लादेशयोगे षष्ठीनिषेधादेव षष्ठ्याभावसिद्धेः।

न च 'न लोके'ति सूत्रे कृतीत्यनुवृत्त्यर्थं कृद्ग्रहणम् षष्ठीनिषेधेन 'ग्रहस्योपरि'

इत्यादौ निषेधो न भवति, कृतीत्यभावे तु—अव्ययमात्रयोगे षष्ठीनिषेधापत्तिरिति वाच्यम्, 'अव्ययार्थस्य ये कर्त्तृकर्मणी'ति व्याख्यानेन सिद्धत्वात्। प्रकृते कृतीत्यभावे 'उभयप्राप्ता'वित्यत्रापि तदननुवृत्तेस्तद्विशेष्यकः—उभयोः = कर्त्तृकर्मषष्ठ्योः प्राप्तिर्यस्मिन् कृतीत्येवं—बहुव्रीहिर्न स्यादिति 'कृती'त्यावश्यकमित्यपि नाशङ्कनीयम्' एकाचो द्वे' इत्यादाविवाशाब्दं कृतीत्येतदादाय बहुव्रीहेरुपपत्तेः।

न च 'भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठाना'मित्यादौ 'प्रधानाप्रधान' न्यायेन प्रधाने णिजर्थकर्त्तरि देवदत्ते चरितार्थतयाऽप्रधाने कर्त्तरि यज्ञदत्ते षष्ठ्यर्थं 'करोतीति कृदि'ति कर्त्तृपरं तदिति वाच्यम्, चैत्रेण मैत्रेण तण्डुलः पाच्यते' इत्यत्राप्रधाने मैत्रे तृतीयावत् विरोधाभावेन कृद्ग्रहणाभावेऽपि तत्सिद्धेरिति चेन्न, 'कृदन्तपर्याप्तानुभवजनकशक्तिज्ञानप्रयोज्यशाब्दबोधविषयक्रियानिरूपितकर्त्तृत्वकर्मत्ववाचकात् षष्ठी भवतु' तद्धितान्तपर्याप्तानुभविकशक्तिग्रहमात्रप्रयोज्यशाब्दबोधक्रियानिरूपितकर्त्तृत्वकर्मत्ववदर्थवाचकात् षष्ठी मा भू'दिति ज्ञापनार्थं तस्यावश्यकत्वात्। एवञ्च 'कृतपूर्वीकट'मित्यत्र हि या करणक्रियोपस्थितिः सा न कृदन्तपर्याप्तशक्तिग्रहप्रयोज्या—किन्तु तद्धितान्तपर्याप्तशक्तिग्रहप्रयोज्यैवेति करोतिक्रियापेक्षया कटस्य कर्मत्वात्प्राप्ता षष्ठी वार्यते।

'तण्डुलानां पाचकतरः' इत्यादौ षष्ठी तु—'तण्डुलानां पाचक इत्यत्र पाकक्रियानिष्ठविशेष्यतानिरूपितकर्त्तृत्वकर्मत्वान्यतरसम्बन्धावच्छिन्नप्रकारताकबोधस्यानुभवसिद्धतया तण्डुलादिपदसमभिव्याहृतपाचकादिपदस्य तादृशशाब्दबोधं प्रति हेतुतायाः क्लृप्ततया तादृशसमभिव्याहारस्य च 'तण्डुलानां पाचकतर' इत्यत्रापि सत्त्वेन सिद्ध्यति।

पूर्वं कर्मत्वाविवक्षया भावे क्तस्ततस्तद्धितप्रत्यये कृते सति कर्मत्वविवक्षेत्येवं रीत्या 'कृतपूर्वी कटम्' इत्यस्य साधुत्वन्तु भाष्यप्रामाण्यादेवावगन्तव्यमिति दिक्।

**१०६ प्र०—'यतश्च निर्धारण'मिति सूत्रस्य व्याख्यानं प्रदर्श्य 'नृणां द्विजः श्रेष्ठः' इति वाक्यस्य शाब्दबोधाकारः प्रदर्शनीयः।**

उ०—ननु 'यतश्च निर्धारण'मिति सूत्राद्यथाश्रुतात्, यत्समुदायान्निर्धारणम् = पृथक्करणं तादृशसमुदायघटकावृत्तिधर्मवत्त्वबोधनं यत्र तत्र तादृशसमुदायवाचकप्रातिपदिकात् षष्ठीसप्तम्यौ भवत इत्यर्थे कृते 'नराणां क्षत्रियः शूरः' इत्यत्र नृशब्दस्य समुदायवाचकत्वादनुपपत्तिर्भवतीति चेदत्रोच्यते—

'जातिगुणक्रियासंज्ञाभिरिति मूले समासादिलम्' निर्धारणेत्युदाहरणम्' एक-

देशस्येत्युपतिष्ठते। एवञ्च 'जात्यादिविशिष्टस्य यद्धर्मावच्छिन्नस्य तादृशजात्यादिशून्यतद्धर्मावच्छिन्नान्वृत्तिविधेयवत्त्वबोधनं यत्र तत्र तद्धर्मावच्छिन्नवाचकप्रातिपदिकात् षष्ठीसप्तम्यौ भवत' इति सूत्रार्थः पर्यवस्यति। यथा—क्षत्रियत्वविशिष्टस्य नरत्वावच्छिन्नस्य क्षत्रियत्वशून्यनरत्वावच्छिन्नब्राह्मणान्वृत्तिशूरत्ववत्त्वबोधनं 'नराणां क्षत्रियः शूरः' इत्यत्रास्तीति—भवति नृशब्दाद्विभक्तिरिति। एवञ्च प्रकृतसूत्रे 'यत' इत्यस्याभावे यस्य जातिविशिष्टस्येत्यर्थे क्षत्रियपदादेव षष्ठी स्यादिति–तद्वारणाय तदुपादानम्।

न च तदभावेऽपि षष्ठीम्प्रबाध्य तत्र परत्वात्प्रथमा भविष्यतीति वाच्यम्, षष्ठ्यपवादत्ववत्प्रथमापवादत्वस्यापि सम्भवात्।

तथा च—स्वघटितसमुदायावधिक—स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयत्वरूपोऽवयवावयविभावरूपश्च विभक्त्यर्थ इति लभ्यते।

'नृणां द्विजः श्रेष्ठः' इत्यतस्तु—नृसमुदायावधिकद्विजेतरनरव्यावृत्तधर्मकरणकपृथक्करणरूपनिर्धारणविषयो नृसमुदायावयवो द्विजः श्रेष्ठ इति बोध इति दिक्।

## अथ अव्ययीभावप्रकरणम् ॥ १५ ॥

**१०७ प्र०—पदविधित्वैकार्थीभावत्वपरिष्कृतिप्रदर्शनमुखेन ग्रन्थोक्तदिशा समर्थसूत्रं पूर्णं वर्णयन्तु।**

उ०—विधीयते–इति विधिः, कर्मसाधनः, पदस्य विधिः पदविधिः, शेषषष्ठ्या समासः, तथा च पदनिष्ठोद्देश्यतानिरूपितविधेयताश्रय इत्यर्थः।

न चैवमपि सनादेः पदविधित्वानापत्तिः, निरुक्तपदविधित्वाभावादिति वाच्यम्, पदविधिसहचरितस्यापि 'पदविधि' शब्देन ग्रहणात्। पदविधिसहचरितत्वञ्च—पदत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयीभूतप्रत्ययविधायकशास्त्रघटितपादघटकशास्त्रविधेयत्वम्। तथा च पदत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय—क्यच्प्रत्ययविधायक—'सुप आत्मनः क्य'जिति शास्त्र—घटिततृतीयाध्यायप्रथमपादघटक–'धातोः कर्मण' इतिशास्त्र–विधेयतया सनः पदविधित्वं सिद्ध्यति।

**वस्तुतस्तु**—पदत्वप्रयोजकप्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकसंज्ञीयोद्देश्यतावच्छेदकसम्पादकशास्त्रविधेयत्वम्–पदविधित्वम्। तथा पदत्वप्रयोजकप्रत्ययः सुप्तिङ्रूपः–तन्निष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकीभूतसंज्ञा—प्रातिपदिकसंज्ञा धातुसंज्ञा च—तादृशसंज्ञानिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकं-कृदन्तत्वम्, तद्धि-

तान्तत्वम्, समासत्वं, सनाद्यन्तत्वञ्च—तत्सम्पादकं शास्त्रं-कृद्विधायकं, तद्धितविधायकं, समासविधायकं, सनादिविधायकञ्च-तद्विधेयत्वं-कृत्तद्धितसमास सनादीनामिति पदविधित्वेन समर्थाश्रितत्वं तेषाम्। एकशेषस्योक्तपदविधित्वाभावेऽपि 'अपवाद एकशेषो द्वन्द्वं बाधिष्यते' इति भाष्येण द्वन्द्वविषयकसामर्थ्याश्रितत्वलाभेन वृत्तित्वव्यवहारः। एवञ्चात एवोपपत्तौ 'पदविधिसहचरितोऽपी'त्यादिकथनस्य नोपयोग इत्यनुसन्धेयम्।

सूत्रे 'समर्थ' इति श्रुतस्य समाससंज्ञारूपपदविधेः साक्षाद्विशेषणत्वासम्भवात् सामर्थ्याश्रिते लक्षणा। सामर्थ्यं द्विविधम्—व्यपेक्षारूपमेकार्थीभावरूपञ्च। प्रकृते च व्यपेक्षारूपं सामर्थ्यं न विवक्षितम्, सामासादिवृत्तिषु तस्यासम्भवात्। किन्त्वेकार्थीभावलक्षणमेव, एकार्थीभावश्च—विशेष्यविशेषणभावावगाह्युपस्थितिजनकत्वम् 'संसृष्टार्थं समर्थ'मिति भाष्योक्तेः। न चैवं घटपदस्यापि घटत्वविशेषणकघटविशेष्यकोपस्थितिजनकत्वेन घटपदेऽप्येकार्थीभावः स्यादिति वाच्यम्' पदविशिष्टत्वमेकार्थीभावत्वमिति स्वीकारात्, वै० 'स्वघटितत्व' 'स्वप्रयोज्या या शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणा—उपस्थितीया विषयता–तादृशविषयतानिरूपिता या शक्तिज्ञानीयमुख्यविशेष्यतासमानाधिकरणा विषयता तत्प्रयोजकपदघटितत्व—स्वप्रयोज्योपस्थितीयविषयत्वानिरूपितविषयताप्रयोजकपदाघटितत्वै--तत्त्रितयसम्बन्धेन। विशिष्टशक्तेः स्वीकारादेव राजपुरुषयोर्वृत्तौ संसृष्टतया राज्ञः पृथगनुपस्थितेः 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति न्यायात् 'राजपुरुषै'कदेशे राज्ञि 'ऋद्धस्ये'ति विशेषणान्वयो न भवति। विशेषणान्वयविवक्षायान्तु–सापेक्षत्वात् 'सापेक्षमसमर्थवद्भवती'ति वार्त्तिकेनैकार्थीभावनिषेधात्समास एव न स्यात्।

नन्वेवं 'देवदत्तस्य गुरुकुल'मित्याद्यनुपपत्तिरिति चेत्—अत्रोच्यते। 'येन सम्बन्धेन नित्यसाकांक्षत्वं तदितरसम्बन्धावच्छिन्नयत्किञ्चिद्धर्मावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नम्प्रति मुख्यविशेष्यतासम्बन्धेनोपस्थितिः कारणम्' इति कार्यकारणभावसिद्धा 'पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेने'ति व्युत्पत्तिः।

तथा च येन सम्बन्धेन नित्यसाकाङ्क्षत्वन्तदितरसम्बन्धेन 'साकांक्षमसमर्थवद्भवती'ति सङ्कोचः कार्यः, एवञ्च देवदत्तस्य निरूपितत्वसम्बन्धेन गुरुत्वेऽन्वयान्नित्यसाकाङ्क्षत्वेन वृत्तिरुपपद्यत एवेति।

एवं संख्याविशेषप्रकारेण तत्तदर्थभाने पृथगुपस्थितेः कारणत्वात् 'राजपुरुष' इत्यादावेकार्थीभावस्वीकारादेव संख्यान्वयोऽपि न भवति।

'शिवस्य भगवतो भक्त' इत्यर्थे 'शिवभागवत' इत्यत्र वृत्तिस्तु गमकत्वादेव। भाष्यप्रामाण्यात्तत्र वृत्तिरेव न तु शिवस्य भागवत इति वाक्यं साधु। तत्र भगवच्छब्दादण् शिवपदेन भगवच्छब्दस्य समासश्च युगपदेव।

अस्याधिकारत्वे प्रतिसूत्रमुपस्थितिकल्पने गौरवाल्लाघवात्परिभाषात्वमेव। 'पदविधि'रिति सूत्रस्वरसात्, 'समासेऽङ्गुले सङ्गः' इत्यादौ समासग्रहणात्' 'गतिर्गताविति सूत्रे—पदस्येत्यधिकारात्समर्थपरिभाषोपस्थिति'रिति कैयटस्वरसाच्च पदत्वेन सुबन्तत्वेन वा यत्र साक्षादुद्देश्यता तत्रैवैतत्प्रवृत्तिः। तेन 'अन्यारादितरे'त्यादावेतदप्रवृत्त्या 'घटादन्य' इत्यादौ पञ्चमी सिद्ध्यति। 'पचन्तं चैत्र'मित्यादौ द्वितीयासामानाधिकरण्यदर्शनेन लकारेऽपि तत्सामानाधिकरण्यकल्पनमिव 'अन्यपदार्थे' 'समर्थः, 'चार्थे' इत्यनुवादबलात्–एकार्थीभावस्यापि लौकिकविग्रहवाक्य एव कल्पना भवतीत्यनुसन्धेयमिति दिक्।

**१०८ प्र०—'सह सुपे'त्यत्र कैयटेन किमभिहितम्, तच्च शेखरकृता कथं खण्डितम्? इति सुस्पष्टं प्रतिपाद्यताम्।**

उ०—**अयमाशयः**—विभक्तस्य 'सुपे'त्येतत्पदस्यानुवर्त्तमानसुप्पदार्थे चैकत्वं विवक्ष्यते। इदमुपलक्षणं 'षष्ठी'त्यादावपि तद्विवक्षा। अत एव वार्त्तिककृता गतिमता तिङा गतेः समास उक्तो न तु गतिसमुदायस्य तिङा। एवञ्च 'महिष्या अजायाश्च क्षीर'मित्यत्र सुबन्तसमुदायस्य 'क्षीर' शब्देन समासो न भवतीति **कैयटः।**

**शेखरकृतस्तु**—'ग्रहं संमार्ष्टी'त्यादावुद्देश्यग्रहगतस्य ग्रहैकत्वादेरविवक्षाया इवोद्देश्यत्वात्प्रकृतेऽपि सुबेकत्वादेरविवक्षैव। किञ्च तद्विवक्षायामेकेनैव केनचित्सुबन्तेन किञ्चिदेकं समस्येत न त्वन्यैरन्यानि, तथा च लक्ष्यासिद्धिः स्यात्। तस्मात् 'सुबि'त्यादौ जातिविवक्षा।

न चैवं 'महिष्या अजायाश्च क्षीर' मित्यत्र समासापत्तिरिति वाच्यम्, स्वाङ्गत्वस्य प्रत्येकं समाप्तत्वाद्यथा स्वाङ्गग्रहणेन स्वाङ्गसमुदायस्य न ग्रहणम्—एवं सुबन्तत्वादेरपि प्रत्येकं समाप्तत्वेन–सुबन्तादिग्रहणेन सुबन्तादिसमुदायस्य ग्रहणाभावेन तद्वारणात्।

आकृतेः प्रत्येकं परिसमाप्तत्वेन प्रतिप्रत्ययं विभक्तिसंज्ञेति पक्षे 'प्रथमयो'

रित्यादौ विभक्तिसमुदायस्य विभक्तिग्रहणेनाग्रहणात् प्रथमयोः प्रत्यययोरेव ग्रहणं प्राप्नोतीति कैयटोक्तं सङ्गच्छते।

अन्यथा विभक्तिग्रहणेन विभक्तिसमुदायस्य ग्रहणापत्तौ 'विभक्तिग्रहणेनाग्रहण-मित्यसङ्गतं स्यादित्याहुरिति दिक्।

**१०९ प्र०—'प्रथमानिर्दिष्ट' मिति सूत्रस्यार्थं प्रदर्श्य 'राजकुमारी-श्रितः 'पूर्वकाय' इत्यादौ प्रसक्तापत्तिर्वार्यताम्।**

**उ०—अयं भावः**—'प्रथमानिर्दिष्ट'मिति सूत्रस्य समासे प्रथमानिर्दिष्टमुप-सर्जनमिति यथाश्रुतव्याख्यानेऽसम्भवः, समासे सति 'सुपो धातु' इति प्रथमाया लुप्तत्वात्। समासे चिकीर्षिते प्रथमानिर्दिष्टमिति व्याख्याने तु कष्टं श्रितः 'कष्टश्रित' इत्यत्र विग्रहे कष्टशब्दस्य द्वितीयानिर्दिष्टत्वादुपसर्जनत्वं न स्यात्, श्रितशब्दस्यै-वोपसर्जनत्वेन पूर्वनिपातापत्तिः स्यात्। एवं 'समासे प्रथमे'त्येव सिद्धे बोधविषय-ताश्रयार्थक-निर्दिष्टपदस्य वैयर्थ्यञ्च स्यादतः समासपदस्य समासविधायकशास्त्र-परत्वं स्थेयम्।

एवञ्च—समासशास्त्रघटकप्रथमान्तपदप्रयोज्यबोधविषयताश्रय उपसर्जनसंज्ञो भवतीत्यर्थेन नोक्तदोषः।

नन्वेवं राज्ञः कुमारीं श्रितो—'राजकुमारीश्रित' इत्यत्र 'द्वितीयाश्रिते'ति समा-सशास्त्रघटक-द्वितीयारूप-प्रथमान्तपदप्रयोज्यबोधविषयताश्रयतया 'कुमारी'शब्द-स्योपसर्जनत्वेन पूर्वनिपातापत्तिरिति चेन्न' 'अप्रधानमुपसर्जन'मिति शास्त्रान्तरोक्त-महासंज्ञाकरणेन उपसर्जनपदस्याप्रधानार्थकतया—'समासशास्त्रघटकप्रथमान्तपद-जन्यबोधविषयाश्रयः—अप्रधानत्वसमानाधिकरणोपसर्जनपदवान्' इति वाच्यार्थे निष्पन्नेऽप्रधानत्वस्य निरूपकांशे नित्यसाकांक्षत्वात्—'यं प्रति यदप्रधानं तं प्रति तदुपसर्जनसंज्ञमित्यवगतेरदोषादिति भाष्येणैव समाधानात्। प्रकृते च राजनिरूपि-ताप्राधान्यस्य कुमार्यां असत्त्वेन न राजपदापेक्षः कुमारीशब्दस्य पूर्वनिपातः।

न चैवं समासशास्त्रघटकप्रथमान्तपदजन्यबोधविषयताश्रयत्वसमानाधिकरणा-प्राधान्यस्य पूर्वशब्दार्थेऽभावात् 'पूर्वकाय' इत्यत्र पूर्वशब्दस्य पूर्वनिपातानापत्ति-रिति वाच्यम्, यं प्रतीत्यादेर्यं शब्दं प्रतीत्यर्थकरणेन शब्दगतस्य साहित्यानुयो-गित्वरूप-लौकिकाप्राधान्यस्याश्रयणेनादोषात्। प्रकृते च 'पूर्वापरे'ति शास्त्रस्थ-प्रथमानिर्दिष्टपूर्वादिशब्दगतस्य तादृशलौकिकाप्राधान्यस्य सत्त्वेन भवति पूर्वशब्दस्य पूर्वनिपात इति दिक्।

**११० प्र०—'मालामतिक्रान्तः' इति विग्रहे उभयोरपि नियतविभक्तिकतया कथं मालामित्यस्यैव नियतविभक्तिकत्वमिति सयुक्तिकमुपपाद्य विग्रहापेक्षया समासापेक्षया वा नियतविभक्तिकत्वमिति विशदं विवेचयत ।**

उ०—ननु प्रथमान्तेन समास इति पक्षाङ्गीकारे 'अतिमालः' 'अतिमालम्' 'अतिमालेन' इत्यादौ सर्वत्रैव 'मालामतिक्रान्तः' इत्येतादृशस्यैव विग्रहस्य सम्भवितया मालामित्यस्य नियतविभक्तिकत्वासम्भव इति चेन्न, परिनिष्ठितविभक्त्याऽपि समासस्याभ्युपेयतया 'मालामतिक्रान्तः' 'मालामतिक्रान्तम्' 'मालामतिक्रान्तेन' इत्यादिरीत्या तत्तद्विभक्त्या समासकरणे 'अति' इत्यस्यानियतविभक्तिकतया तदपेक्षया नियतविभक्तिकस्य 'माला'मित्यस्योपसर्जनत्वसिद्धेः । एकस्यानियतविभक्तिकत्वे हि अपरस्य नियतविभक्तिकत्वव्यवस्थापनसम्भवात् । ननु नियतविभक्तिकत्वं विग्रहघटकपदापेक्षया ग्राह्यं समासापेक्षया वा ? इति चेदत्रोच्यते—समासापेक्षयैव नियतविभक्तिकत्वं ग्राह्यम् , परिनिष्ठितविभक्त्याऽपि समासस्य स्वीकृतत्वेन 'राजकुमारी' इत्यादौ कुमार्या नियतविभक्तिकत्वाभावेनोपसर्जनत्वं न सम्भवति । एतदेव समीचीनं प्रतिभाति, विग्रहवाक्यघटकपदापेक्षया नियतविभक्तिकत्वस्य ग्रहणे तु सहशब्दस्य भार्याशब्देन सह समासेऽव्ययरूपात् सहशब्दात् विभक्तिमात्रोत्पत्त्यभावेन 'सभार्यः' इत्यादावनियतविभक्तिकत्वाभावेन तदपेक्षया नियतविभक्तिकत्वस्य 'भार्यया' इत्यत्राभावात् उपसर्जनत्ववैकल्येन ह्रस्वत्वं न स्यात् । समासापेक्षया नियतविभक्तिकत्वग्रहणे च समासस्यानियतविभक्तिकतया तदपेक्षया नियतत्वस्य ग्रहणे बाधकाभावादिति दिक् ।

**१११ प्र०—'यथाऽसादृश्य' इति सूत्रविषये प्राङ्नव्ययोर्मते शेखरोक्तदिशा निरुच्य तयोर्मतयोर्युक्तायुक्तत्वे विवेचनीये ।**

उ०—अयमाशयः—'असादृश्य, इतिच्छेदः, पर्युदासश्च एवञ्च 'यथा हरि'त्यादौ यथार्थतया 'अव्ययं विभक्ती'त्यादिना समासे प्राप्ते सूत्रमिदं नियमार्थम्—'असादृश्ये एव यथाशब्दः समस्यते नान्यत्रे'ति ।

तथा शब्दस्यापि सादृश्ये वृत्त्या तेन सह हरशब्दस्य 'अव्ययं विभक्ती'त्यादिना समासप्राप्तिस्तु नाशङ्कनीया, 'सदृश' इत्युक्तेर्नियमेन प्रतियोग्याकांक्षादर्शनात्—प्रातियोगितासम्बन्धेन सादृश्यान्वयिवाचकेन सादृश्यबोधकाव्ययस्य 'यथे-त्यादेः' तेन समासाङ्गीकारात् ।

ननु 'प्रकारवचने थालि'ति विहितथाल्प्रत्ययान्तस्य सादृश्ये वृत्तिरनुपपन्नेति चेत् अत्रोच्यते—सामान्यस्य भेदको यो विशेषः स प्रकारः, तस्मिन् प्रकारे थालिति 'प्रकारवचने था'लिति सूत्रस्यार्थः। ततश्च 'यद्विशेषधर्मवान् हरिस्तद्विशेषधर्मवदभिन्नो हर'इति बोधे सति यत्तच्छब्दाभ्यां तयोः प्रकारयोरभेदावगमेऽर्थादुपमानत्वप्रतीतिरिति। 'यथाऽसादृश्ये' इत्यत्रापि सादृश्यशब्देनोपमानत्वमेव प्रत्येतव्यमिति **प्राचीनाः**।

**नवीनास्तु**—'असादृश्ये' इति किमर्थम्? यथा देवदत्तस्तथा यज्ञदत्तः' इति भाष्येण यथा शब्दः सुबन्तेन समस्यते—इत्यर्थको 'यथे'त्ययं विधिः, 'असादृश्ये' इति प्रसज्यप्रतिषेधेन पूर्वप्राप्तनिषेधार्थमिति लभ्यते। 'असादृश्ये' इत्यस्य पर्युदासेनास्य नियमार्थत्वे तु 'यथाऽसादृश्ये' इति सूत्रं किमर्थ'मित्येवाशङ्कितं स्यान्न तु 'असादृश्ये' इति किमर्थमिति। 'यथे'त्यस्य 'यथाशक्ति' यथाबल'मित्युदाहरणम्' न च 'यथाशक्ती'त्यादौ 'अव्ययं विभक्ती'त्यनेनैव यथार्थतया समासस्य सिद्धत्वात् 'यथे'त्यस्य विधित्वे न फलमिति वाच्यम्, तेन—यस्मिन्यस्मिन्नर्थे विद्यमानस्याव्ययस्य समास इष्यते तत्तदर्थबोधाभिप्रायेण सूत्रोपात्तो यः शब्दस्तद्घटकतया गृहीतेन तत्तदर्थकेनाव्ययेन समासाभावात्।

न चैवमप्यसादृश्ये यथाशब्दस्य प्रयोगासम्भवेन 'यथे'त्यंशोदाहरणानामेवासम्भवः, 'असादृश्ये' इत्यनेन निषेधादिति—सूत्रमेव व्यर्थमिति वाच्यम्, 'यथाऽसादृश्ये' इत्यत्र–वीप्सा–योग्यता–पदार्थानतिरिक्तवृत्तिबोधकस्य–'यथाशक्ति' इत्युदाहरणे च पदार्थानतिरिक्तवृत्तिबोधकस्य यथाशब्दस्य सत्त्वेनादोषात्। ननु 'यथाशब्द उपमानत्वं द्योतयती'ति सकलाभियुक्तोक्तेर्'यद्विशेषवान् देवदत्तस्तद्विशेषवदभिन्नो यज्ञदत्त इति बोधोत्तरम्—'उपमानदेवदत्ताभिन्न उपमेयो यज्ञदत्त' इति बोधो गृहीतविशेषधर्मरूपसाधारणधर्मस्योपमानोपमेयभावस्थल आवश्यकत्वादभ्युपेयः। लक्षणामूलकव्यञ्जनास्थल इवोभयोः शाब्दत्वं सुवचम्। अत एवोपमानोपमेययोः समानविभक्तिकत्वसिद्धिः। एवञ्च पूर्वपदार्थप्रधान्याभावात् 'यथा हरिस्तथाहर' इत्यत्राव्ययीभावाप्राप्त्या 'असादृश्ये' इति व्यर्थमिति चेत्—अत्रोच्यते–प्रसिद्धत्वात्प्रकारवचनस्यैव थालन्तस्य 'यथे'ति सूत्रे ग्रहणे सूत्रारम्भसामर्थ्यात्—'द्विमुनी'त्यादाविव पूर्वपदार्थप्राधान्याभावेऽपि 'यथा हरिस्तथा हर' इत्यत्राव्ययीभावसमासः स्यादतः—'असादृश्ये' इति कृतम्। 'असादृश्ये' इति कृते तु थालन्तभिन्नस्याव्युत्पन्नस्यैव 'यथे'ति सूत्रे तदुदाहरणे च ग्रहणम्।

न च 'यथाबल' मित्युदाहरणे प्रकारवाचिथालन्तस्यैव ग्रहणमस्तु 'अव्ययं विभक्ती'त्यत्र च यथाग्रहणं न कर्त्तव्यम्, तथा च सूत्रगृहीताव्ययत्वाभावाद्यथा बलमित्यादौ 'अव्यय' मित्यनेनैव समासो भविष्यति, 'यथा हरिस्तथा हर'इत्यादौ च पूर्वपदार्थप्राधान्याभावादेवाव्ययीभावो न प्राप्नोति, एवञ्च 'यथाऽसादृश्ये' इति सकलं सूत्रं नैव कर्त्तव्यमिति वाच्यम्, 'यथे'ति सूत्रारम्भसामर्थ्येन यथा-बल'मित्यादौ प्रकारवाचिथालन्तस्याप्रयोगात्। प्रकारार्थे साधोस्थालन्तस्य वीप्सा-द्यर्थेऽसाधुत्वापत्तेश्च।

तथा च भाष्ये—'असादृश्ये' इत्युच्यते, तत्रेदं न सिद्ध्यति–'यथाशक्ति' 'यथाबलम्'–प्रकारे यस्थाल् तदन्तस्य सादृश्य एव वृत्तेः'—इत्याशङ्क्य वीप्सा-दिवाचिनोऽत्र सूत्रे' 'यथाबल' मित्युदाहरणे च ग्रहणमित्यर्थकोक्त्यनन्तरम्–'अथ यः प्रकारवचने थाल् तदन्तस्य ग्रहणं कस्मान्न भवति? पूर्वेण प्राप्नोति 'सादृ-श्यसम्पत्ती'ति—इति। पूर्वपक्षिणोक्ते—'प्रतिषेधवचनसामर्थ्यान्न भविष्यती'त्यु-त्तरितम्। 'अनेन भाष्येण प्रकृतसूत्रे प्रकारवचनथालन्तस्य ग्रहणं शङ्क्यते' इति वक्तुं न युक्तम्, 'असादृश्ये' इत्यस्य श्रवणात्। न च 'असादृश्ये' इति विस्म-रणेनायं पूर्वपक्ष इति वाच्यम्, 'पूर्वेण प्राप्नोती'त्यादेरसङ्गत्यापत्तेः। तस्मात्–'उदाहरणे थालन्तस्य ग्रहणं, तत्र सादृश्यार्थकेन समासं कृत्वाऽन्यत्रार्थे प्रयोगे बाधकाभावः' इत्यभिमानेन 'अर्थघटितं साधुत्व'मित्यजानतः—अव्युत्पन्नसत्त्वे मानञ्चापश्यतः—शङ्केयमिति युक्तम्। 'प्रतिषेधवचने'त्यस्य प्रतिषेधयुक्तैतद्वचन-सामर्थ्यादित्यर्थः। एवञ्चाव्युत्पन्नसत्त्वे, अर्थघटितं साधुत्वमित्यत्र चैतदेव मानम्, इत्यवसेयम्।

'अव्यय'मिति सूत्रे यथार्थग्रहणं तदर्थकान्याव्ययग्रहणार्थम्, एवञ्च 'यथाश-क्ती'ति 'यथे'त्युदाहरणमेवेति भाष्यात्प्रतीयते 'यदव्युत्पन्नं वीप्सावाचि तस्येदं ग्रहण' मिति भाष्यात् वीप्सादावपि यथाशब्देन समासो भवत्येव। एवञ्च स्पष्टमेवोपक्रमोप-संहारबलादस्य विधित्वं लभ्यत इत्याहुः।

**वस्तुतस्तु**—'यथाऽसादृश्ये' इत्यत्र 'यथे'ति न विधायकम्' 'असादृश्य' इति च पर्य्युदास एव, नियमार्थमेवेदं सूत्रम्। असादृश्ये, इति किमर्थम्? 'यथा देवदत्तस्तथा यज्ञदत्त' इति भाष्यस्य च सकलमेव सूत्रं किमर्थमित्यत्र तात्पर्यम्, एकदेशद्वारा समुदाय एव प्रश्नस्य विश्रान्ते वक्तुं युक्तत्वात्। अत एव 'ततः पश्चा' दित्यादिभाष्यप्रयोगोऽपि सङ्गच्छते।

थाल्सूत्रे च सादृश्यमेव प्रकारार्थः, 'यथेत्ययं प्रकारवचने थाल् स च सादृश्ये वर्त्तते, इति भाष्याक्षरस्वारस्यानुगुण्यात् । 'यत्सादृश्यवान् हरिस्तत्सादृश्यवान् हर' इति प्राथमिकबोधानन्तरं 'हरिसदृशो हरः' इति पार्यन्तिकबोधोदये बाधकाभावेन हरिसादृश्यस्य हरे लाभात् । एवञ्च प्राचीनोक्तमेव युक्तमिति दिक् ।

**११२ प्र०—समासान्तानां समासार्थालौकिकविग्रहवाक्यस्थोत्तरपदावयवत्वमिति प्राचीनमतं सप्रमाणमुपपाद्य तन्निरासमुखेन तत्र विषये नागेशेन किमुक्तमिति प्रमाणाभिधानेन-निरुच्यताम् ।**

उ०—'समासान्ता' इत्यत्र समासपदं समासार्थालौकिकविग्रहवाक्यपरम् । तेन 'बहुकुमारीक' इत्यत्र समासात्पूर्वं, तत्समकालं वा समुदायस्याप्रातिपदिकत्वेन समासोत्तरञ्च कपि सति स्त्रीप्रत्ययान्तत्वाभावेन—'उपसर्जनं यो गोशब्दः स्त्रीप्रत्ययान्तश्च तदन्तसंज्ञाभिन्नाजन्तप्रातिपदिकस्य ह्रस्व' इत्यर्थकेन 'गोस्त्रियो'रित्यनेन ह्रस्वत्वं न ।

अत्र प्रमाणन्तु 'गोस्त्रियो'रिति सूत्रस्थम् 'अन्तः' इति सूत्रस्थञ्च भाष्यमेव । तत्र हि—'कपि ह्रस्वत्वस्य प्रतिषेधो वक्तव्यः'-बहुकुमारीकः, न वक्तव्यः-कपि कृतेऽनन्त्यत्वाद् ह्रस्वत्वं न भविष्यति । इदमिद सम्प्रधार्यम्-कप् क्रियताम् ? ह्रस्वत्वमिति, परत्वात्कप्, समाससामान्यापेक्षत्वादन्तरङ्गं ह्रस्वत्वम् । अन्तरङ्गतरः कप् । ननु चायं कप्समासान्त इत्युच्यते, तादर्थ्यात्ताच्छब्द्यम्भविष्यतीत्युक्तम् । 'अन्तः' इति सूत्रे च—'किं समासान्त उदात्तः ? आहोस्विदुत्तरपदस्य ? आद्ये 'इदम्प्रथमकाः' इत्यादौ कपि पूर्वस्योपसंख्यानङ्कर्त्तव्यम् । अन्त्ये'ऽनृचः' इत्यादौ 'नञ्सुभ्या'मित्यनेनान्त्याकारस्योदात्तत्वानापत्तिः' इत्युक्तम् । यदि समासे कृते समासान्तः प्रवर्त्तेत तदा—'इदम्प्रथमका' इत्यत्र समासे कृते समासान्तापेक्षया परत्वात् 'इदमेतद्भ्यः प्रथमपूरणयोः क्रियागणने' इत्यनेन स्वरे कृते ततः कपि दोषाभावसिद्धौ भाष्यासङ्गतिः स्फुटैव । समासान्तास्तु-सरूपसूत्रभाष्यप्रामाण्यात् समासार्थालौकिकविग्रहवाक्यस्थोत्तरपदावयवाः ।

तत्र भाष्ये हि—'कृतद्वन्द्वानां विभक्तौ परत एकशेषः—' इति पक्षे-'ऋक् च ऋक् च ऋचौ, असारूप्यादेकशेषो न प्राप्नोती'त्युक्तम् । तच्चोत्तरपदावयवत्वे-ऋच्छब्दयोर्द्वन्द्वेऽप्रत्यये 'ऋच् ऋच् औ' इति दशायां सारूप्याभावेनैकशेषाप्राप्तेः-सङ्गच्छते । समासावयवत्वे तु 'ऋच् ऋच्' इत्यनयोः सारूप्यसत्त्वेन 'असारूप्यादेकशेषो न प्राप्नोती'त्यस्यासङ्गतिः स्पष्टैव ।

अत एव 'द्विपुरी' त्यादावकारान्तोत्तरपदत्वेन 'अकारान्तोत्तरपदो द्विगुः स्त्रिया-

मिष्ट' इति स्त्रीत्वं सिद्ध्यति। समुदायावयवत्वे त्वकारान्तोत्तरपदत्वाभावात्तन्न सिद्ध्येदिति प्राचीनाः।

**नवीनास्तु**—'तादर्थ्यात्ताच्छब्द्य'मिति भाष्यप्रामाण्यात् समासपदस्य समासार्थालौकिकविग्रहवाक्यं लाक्षणिकतया समुदायचरमावयवत्वमेवोचितम्। उत्तरपदावयवत्वन्तु न युक्तम्, फलाभावात्। न चोत्तरपदावयवत्वानङ्गीकारे 'द्विपुरी'त्यादौ स्त्रीत्वं न सेत्स्यतीति वाच्यम्' 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति 'समासान्ताः' इति सूत्रभाष्योक्त्या लिङ्गानुशासनस्य लोकसिद्धलिङ्गानुवादकत्वेन लोकादेव तत्सिद्धेः। अत एव 'परवल्लिङ्ग'मिति सूत्रसत्त्वेऽपि 'द्विनावम्' 'अर्धखारम्' इत्यादौ नपुंसकत्वसिद्धिः।

अत एव 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्ट' इत्यत्र उत्तरपदग्रहणस्य 'पञ्चराजम्' इत्यादौ स्त्रीत्वाभावरूपं फलं सङ्गच्छते।

समुदायचरमावयवत्वाङ्गीकारादेव 'अन्त' इति सूत्रस्थभाष्यं सङ्गच्छते। तत्र हि—

'समासस्यान्तोदात्तत्वमुत्तरपदस्य वा' इति विकल्पे,—आद्ये 'इदम्प्रथमकाः' इत्यादौ कपोऽन्तोदात्तत्वापत्तिमुक्त्वा अन्त्ये 'अनृच' इत्यत्रान्तोदात्तत्वासिद्धिरित्युक्त्वा-उभयोरपि प्रकरणेन लक्ष्यानुसारात्क्वचिदुत्तरपदान्तस्य क्वचित्समासान्तस्योदात्तत्व'मित्युक्तम्। उत्तरपदावयवत्वस्वीकारे तु 'नञ्सुभ्या'मिति सूत्रेण च कारस्यान्तोदात्तत्वसिद्धेः 'अनृचः' इत्यत्रान्तोदात्तत्वासिद्धि'रिति कथनपरभाष्यविरोधः स्पष्ट एव।

अत एव 'उपशरद'मित्यत्राव्ययग्रहणेन पूर्वभागस्याग्रहणात् 'नाव्ययीभावा'दित्यम्, अव्ययग्रहणेन समासान्तस्य ग्रहणात्। 'अव्ययाना'मिति टिलोपाभावश्च सिद्धः।

न च समुदायावयवत्वे सरूपसूत्रस्थभाष्यविरोध इति वाच्यम्, समुदायावयवत्वेऽपि तद्भाष्यविरोधाभावात्। तथाहि—

'ऋक् च ऋक् च ऋचौ' 'असारूप्यादेकशेषो न प्राप्नोती'ति भाष्यम्। विभक्तौ परतः कृतद्वन्द्वानामेकशेष इति पक्षे समासात्प्राग्भागस्य विभक्तिपरत्वाभावः, तद्विशिष्टस्य तु न सरूपत्वमित्युक्तं भाष्ये 'असारूप्या'दितीत्याहुरिति दिक्॥

इति दरभङ्गामण्डलान्तर्गत-'केशुली' ग्रामवासि-मैथिलझोपाह्व-
श्रीशोभाकान्तशर्मविरचिता 'लघुशब्देन्दुकला' समाप्ता।

❀ श्री इन्दुमती विजयते ❀

# परिशिष्टम्

## (१) व्याकरणाध्ययनस्य प्रयोजनम् (२) शब्दानुशासनस्य प्रयोजनम् ।

व्याक्रियन्ते शब्दा अनेनेति व्युत्पत्त्या शब्दज्ञानजनकं व्याकरणम्। तस्यैव व्याकरणस्य शब्दानुशासनमन्वर्थं नाम—अनुशिष्यन्तेऽपशब्देभ्यो विविच्य कथ्यन्ते साधुशब्दा अनेनेति करणल्युडन्ततया, शास्त्रपदेन सामानाधिकरण्याच्छब्दानुशासनं नाम शास्त्रं तच्च व्याकरणमेव। एवञ्च शब्दज्ञानमेव व्याकरणाध्ययनस्य प्रयोजनम्। तस्याऽस्य व्याकरणस्य को विषयः, किं प्रयोजनम्, अधिकारी च कः, सम्बन्धश्च कः, इति चेदत्राहुः—

वैदिका लौकिकाश्च शब्दा विषयाः, तज्ज्ञानं प्रयोजनम्, तज्जिज्ञासु-रधीत-काव्य-कोशादिरधिकारी चेति ज्ञेयम्। तान्यष्टादशप्रकाराणि-१. वेदरक्षा। २. ऊहः। ३. आगमः। ४. लाघवम्। ५. असन्देहः। ६. म्लेच्छताऽसम्पत्तिः। ७. स्वरवर्णदोषराहित्यम्। ८. सार्थकवेदज्ञानम्। ९. सुशब्दापशब्दयोधर्माधर्मजनकत्वज्ञानम्। १०. प्रत्यभिवादे नाम्नि प्लुतज्ञानम्। ११. विध्यादिवाक्यघटकविभक्ति-पदार्थादिज्ञानम्। १२. पदाक्षरादिविभागज्ञानम्। १३. चतुर्विध-पदजातकालव्य-ञ्जयव्यञ्जकविभक्तिस्थाने भेदज्ञानम्, यद्वा सकलपदजातज्ञानम्। १४. वाग्विस्तारस-म्पत्तिः। १५. असाधुशब्देभ्यो विविच्य सुशब्दज्ञानम्। १६. अपशब्दप्रयोगजन्य प्रत्यवायपरिहारकप्रायश्चित्ताभावः। १७. नामकरणेषु विहितनामस्वरूपज्ञानम्। १८. सर्वविभक्त्यन्तानां सम्यगुच्चारणम्। एतद्व्याख्यानं महाभाष्ये विस्तृतम्॥

**किञ्च**—शिक्षा कल्पो व्याकरणं ज्योतिश्छन्दो निरुक्तञ्चेति षडङ्गानि वेदस्य हस्तपादादीन्यङ्गानि यथाऽङ्गिनं देहमुपकुर्वन्ति तथैव व्याकरणादीन्यङ्गानि वेदमङ्गि-नमुपकुर्वन्तीति वेदोपकारकता व्याकरणरूपाऽङ्गस्याऽवश्याऽध्येयत्वं प्रयोजयति। यद्यपि व्याकरणवदन्यान्यप्यङ्गान्युपकारकाणि, तथापि—

'मुखं व्याकरणं तस्य ज्यौतिषं नेत्रमुच्यते।
निरुक्तं श्रोत्रमुद्दिष्टं छन्दसां विचितिः पदे।
शिक्षाघ्राणं तु वेदस्य हस्तौ कल्पान् प्रचक्षते॥'

इत्याद्युक्त्या व्याकरणस्य मुखत्वप्रतीतेः मुखं यथाऽन्यांङ्गमुपकुर्वदेवाऽङ्गिनं देहमुपकरोति, तद्वद्व्याकरणेन पदार्थज्ञाने जाते वाक्यार्थज्ञानोदयादितरेषामङ्गानामर्थबोधे जाते वेदोपकृतिस्सम्पाद्यते ।

न केवलं धर्ममर्जयद्भिरेव व्याकरणमध्येयमपि तु शब्दमात्रमधिजिगांसमानैः सर्वैरेवाऽध्येतव्यम्, पदपदार्थज्ञानाऽभावे शास्त्रस्य नैष्फल्यापत्तेः । तदुक्तम्--

'यो वेद वेदवदनं सदनं हि सम्यग्
ब्राह्मयाः स वेदमपि वेद किमन्यशास्त्रम् ।
यस्मादतः प्रथममेतदधीत्य विद्वान् ।
शास्त्रान्तरस्य भवति श्रवणेऽधिकारी ॥ इति ।

'काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्' इति वचनान्तरादपि सर्वशास्त्रोपजीव्यत्वमस्य प्रतीयते । 'ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदो ध्येयो ज्ञेयश्चे'ति श्रुत्या सन्ध्योपासनादिवत् फलान्तरानभिसन्धानपूर्वकमङ्गाध्ययनमायाति । अङ्गेषु पदपदार्थज्ञानसम्पादकतया व्याकरणस्य मुख्यत्वेन अन्याङ्गापेक्षया प्रथममस्याऽध्ययनमिति प्रागुक्तम् । अत एव पतञ्जलिनोक्तम्-'प्रधानं षट्स्वङ्गेषु व्याकरणं, प्रधाने च कृतो यत्नः फलवान् भवति' इति ।

किञ्च—'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः' इति शक्तिग्राहकेषु व्याकरणस्य प्राधान्येनोपादानात्, शक्तिग्रहं विना शाब्दबोधाऽसम्भवेनाऽध्ययनमात्रस्यैव वैयर्थ्यापत्तिरिति व्याकरणमवश्यमध्येयम् । अत एव-'यदधीतमविज्ञातं निगदेनैव शब्द्यते । अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्' इति निन्दार्थवादेनाऽर्थापरिज्ञानपूर्वकाऽध्ययनस्य निष्प्रयोजनत्वबोधनादध्ययनशाकल्योपपत्तये व्याकरणाध्ययनमतीवावश्यकमिति तत्त्वविदः ।

## ननु कः व्याकरणपदार्थः ?

व्याक्रियन्ते = व्युत्पाद्यन्ते, शब्दा अनेनेति व्याकरणं **'सूत्रम्'** । ननु यदि सूत्रमेव व्याकरणमित्युच्यते चेत्तदा द्वाभ्यामपि शब्दाभ्यामष्टाध्यायाः प्रतिपादनाद्व्यतिरेकाभावेन व्याकरणस्य सूत्रमित्यत्र षष्ठ्यर्थाऽनुपपत्तिरिति चेन्मैवम्, 'राहोः शिरः' इति वद् व्यपदेशिवद्भावेन तत्सिद्धेः । एवञ्च सूत्रमेव व्याकरणमित्यवसेयम् ।

यत्तु—'व्याकरणाच्छब्दाप्रतिपत्तिरि'ति शब्दविषयकव्यवहाराऽनुपपत्तिः, नहि सूत्रेभ्य एव शब्दप्रतिपत्तिर्भवतीत्युक्तं तच्चिन्त्यम् , उदाहरण-प्रत्युदाहरण-वाक्याध्याहार एतत्समुदितस्य सूत्रपदेन ग्रहणात् ।

**परे तु**—वृक्षस्य शाखेतिवत् समुदितावयवयोर्भेदात् लक्ष्यलक्षणमेव व्याकरणमिति न षष्ठ्यर्थानुपपत्तिः । नन्वेवं सूत्राणि चाप्यधीयानो वैयाकरणोऽवैयाकरणः स्यादिति वाच्यम् , वनैकदेशे पुष्पिते सति पुष्पितं वनमितिवत् समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि प्रवर्तन्ते, यथा—पूर्वे पाञ्चालाः, उत्तरे पाञ्चालाः, तैलं भुक्तमित्यादि ।

यत्तु केवलं लक्ष्यं व्याकरणं, तन्न मनोरमम् । पाणिनिना प्रोक्तं पाणिनीयमित्यादौ व्याकरणे भवो योगो वैयाकरणः इत्यत्र, च प्रोक्तादितद्धितानामनुत्पत्तिः स्यात् , नहि पाणिनिना प्रोक्ताः शब्दाः, नहि शब्दे भवो योगो वैयाकरणो भवतीति दिक् ।

---

## (३) स्फोटः—

स्फुटति = अभिव्यक्तीभवत्यर्थो यस्मादिति व्युत्पत्त्या-अर्थप्रकाशकत्वं स्फोटत्वम् । प्रकाशकत्वञ्च ज्ञानरूपम् । अयं स्फोटः शब्दः पङ्कजादिशब्दवत्-योगरूढः । अन्यथा केवलं योगस्वीकारे वाच्य-लक्ष्य-व्यङ्ग्यानां चेष्टानाञ्च व्यङ्ग्यार्थप्रतिपादकत्वेन तत्राऽतिव्याप्तेः । एवञ्च—अर्थनिष्ठविषयताप्रयोजकत्वमेव स्फोटत्वं पर्यवसितम् ।

तत्र वर्णस्यैव तत्त्वाऽभ्युपगमे—वर्णस्फोटः, पदादीनां तत्त्वाभ्युपगमे-पदादिस्फोटः, इति व्यवहारः । तत्र वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदस्फोटः, अखण्डवाक्यस्फोटः वर्ण-पद-वाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सन्ति । तत्राऽखण्डवाक्यस्फोटस्यैव सिद्धान्तसिद्धतया वर्णस्फोटादिकानां स्वीकारे आकाङ्क्षानिवर्तकत्वाभावादवास्तवकत्वेऽपि शास्त्रीयप्रक्रियानिर्वाहायेति बोध्यम् ।

तत्र पदन्नाम वर्णसमूहः । वाक्यं च पदसमूहः । ननु नैतदेवं वक्तुं शक्यते नहि वर्णानां समूहः कश्चिदस्ति वास्तव इति कुतस्तत्समूहः पदं भविष्यति, तदभावाच्च नितरां पदसमूहो वाक्यमवकल्पते । किञ्च समस्ताः वर्णाः वाचकाः, व्यस्ता-

वेति विकल्पोपहतत्वेन वाचकत्वं कथमपि नोपयुज्यते इति चेन्न, स्फोटात्मा शब्दोऽर्थप्रतिपादक इत्यवश्यमभ्युपेयम् । ननु स्फोटस्यार्थावाचकत्वे किन्नाम मात्सर्यन्तत्र नैयायिकादीनामिति चेत्सत्यम्, आप्तप्रणीतत्वेन शब्दप्रमाणस्य तैरभिधानात् । स्फोटस्य नित्यत्वे नाप्तप्रणीतत्वं संघटते ? यस्य वर्णात्मनः शब्दस्यानित्यत्वं नासावर्थप्रतीतिहेतुः, यश्चार्थप्रतीतिहेतुः स्फोटात्मा शब्दस्तस्य नानित्यत्वं, नचाप्तप्रणीतत्वमिति नैयायिका व्यग्रा भवेयुः । तस्मादनित्यानां वर्णानामेव वाचकत्वं प्रतिष्ठापनीयं, पराकरणीयश्च स्फोट इति चेदुच्यते—कूप इत्यादौ ककारादेर्वर्णस्यापगमे सति कूपार्थप्रतीतेरसद्भावात्, तद्भावे च तादृशार्थप्रतीतेः सद्भावात् तेषामेवार्थप्रत्यायकत्वात्सामर्थ्यमिति प्रत्यक्षानुमानातीतः स्फोटो नामावश्यं परिकल्पनीयः । परन्त्विदं सर्वथाऽनुपपन्नं कूप इत्यादौ व्यस्ता वर्णा अर्थप्रतिपादयेयुः ? समस्ता वा ? नाद्यः—कूप इत्यादौ ककारमात्रश्रवणे तदर्थप्रतीतेरभावात् । नान्त्यः—शब्दस्याशुविनाशित्वेन तावद्वर्णानां सामस्त्यासम्भवात् । यत्तु पूर्वपूर्ववर्णजनितसंस्कारसहितोऽन्त्यवर्णः प्रत्यायक इति तदपि न, येन क्रमेण संस्कारस्तेनैव क्रमेण अर्थावबोध इत्यत्र नियामकाभावेन सरो–रसो, नदी–दीन, इत्यादावर्थप्रतीतिवैलक्षण्यानुपपत्तेरिति वर्णा वाचका इति स्फोटोऽवश्यमङ्गीकर्त्तव्यः ।

स च निरवयवः, नित्यः, एकः, निष्क्रमकः, इति नायं वर्णपक्षोच्छेदनदक्षदूषणपात्रतां प्रतिपद्यते । ननु स्फोटस्यार्थप्रतिपादकत्वे–शब्दादर्थप्रतीतिरिति व्यवहारः कथमुपपद्यत इति चेन्न, यतोऽर्थप्रतिपत्तिः स शब्दः अर्थप्रतिपत्तिश्च स्फोटादेव न वर्णेभ्य इति स्फोट एव शब्दः । अत एव पतञ्जलिना गौरित्यत्र श्रोत्रप्रतिभासे बहवोऽर्थाः प्रतिभासन्ते, कस्तेषां मध्ये शब्द इत्युपक्रम्य यतोऽर्थप्रतिपत्तिः स शब्द इत्युपसंहृतम् । नन्वर्थप्रतीतेः स्फोटकार्यत्वमनुपपन्नं वर्णेषु भवत्स्वर्थप्रतीतिरभवत्सु च तेष्वर्थप्रतीतेरभावादिति चेन्न, वर्णाभिव्यक्तः स्फोटोऽर्थप्रतीतिमादधातीति स्फोटव्यञ्जकवर्णेष्वन्यथासिद्धिशून्यत्वविरहादर्थप्रतीतिजनकत्वोपपत्तेः । ननु स्फोटादर्थप्रतीत्यभ्युपगमे घकारमात्रश्रवणे कलशार्थप्रतीतिसिद्धावितरवर्णजन्मनां वैयर्थ्यमिति चेन्न, तदवगतेरेवाऽतिशयकरणार्थत्वात् । तथाहि—रत्नपरीक्षकाणां प्रथमदर्शने रत्नरूपमलं प्रकाशमानमपि, पुनः पुनः परीक्षकाणां चरमे चेतसि चकास्ति—निरवद्यं रत्नतत्त्वम् । एवञ्च पदबुद्धेः पदस्फोटः, वाक्यबुद्धेश्च वाक्यस्फोटः, इति प्रत्यक्ष एव स्फोटः । तत्र पदस्फोटात् पदार्थप्रतीतिः । वाक्यस्फोटाच्च वाक्यार्थप्रतीतिः । परमा-

र्थतस्तु—पदस्फोटो वाक्यावयवभूतो नास्त्येव, निरवयवमेव वाक्यं निरवयवस्यैव वाक्यार्थस्य बोधकम्। यथा पदस्यावयवा वर्णा न सन्ति तथा वाक्यस्यावयवाः पदानि न सन्ति, इत्यवयवकल्पनायान्तु—यथा वाक्यस्यावयवाः पदानि, पदानामवयवा वर्णाः, एवं वर्णानामप्यवयवैर्भवितव्यं, तदवयवानामप्यवयवान्तरैरित्यानन्त्यात् का व्यवस्था स्यात्?। ननु यथा पदेषु वर्णा न सन्ति, वाक्येषु पदानि न सन्ति, तथा महावाक्येष्ववयवान्तरवाक्यान्यपि न स्युः, महावाक्यान्यपि प्रकरणापेक्षया तात्त्विकानि न स्युः, प्रकरणान्यपि शास्त्रापेक्षया भिन्नानि न स्युरिति एकमेव शास्त्रतत्त्वं विभागद्वयमापततीत्यलं स्फोटाटोपेनेति चेन्न, यतः शब्दब्रह्मैव विभागद्वयमनाद्यविद्यावासनोपप्लवमानभेदमर्थभावेन विवर्त्तते न तु वाचकाद्विभक्तं वाच्यमपि किञ्चिदस्तीति काल्पनिक एव वाच्यवाचकविभाग इति दिक्।

---

## (३) प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः—

ननु प्रकृति–प्रत्ययौ हि सहार्थं ब्रूतस्तयोः प्रत्ययस्यार्थः प्रधानमित्युच्यते। विशेष्यतासम्बन्धेन प्रकृत्यर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति—विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितिः कारणमिति लभ्यते। एवं च 'देवदत्तः पचती'त्यादौ प्रत्ययार्थस्य प्रधानत्वेन तस्य देवदत्तादिभिः सममभेदान्वयात् विक्लित्त्यनुकूलव्यापाराश्रयाभिन्नो देवदत्तः इति प्रथमान्तार्थस्यैव प्राधान्यं युक्तमिति चेन्न, प्रत्ययार्थः प्रधानमित्युत्सर्गस्य भावप्रधानमाख्यातमित्यपवादेन भूवादिसूत्रस्थभाष्यवचनेन बाधात्। आख्याते व्यापारस्यैव प्राधान्यलाभेन पूर्वोक्तकार्यकारणभावे कारणतावच्छेदककोटौ प्रत्यये तिङ्भिन्नत्वनिवेशः तिङन्ते कारणबाधेन अप्राधान्यासम्भवात्।

नच धातोरेवाख्यातपदवाच्यत्वेन धातुपदेनोपस्थितयोः फलव्यापारयोः व्यापारस्य भूवादिसूत्रस्थभाष्यबलेन प्राधान्यलाभे इति तिङन्तव्यापारस्य प्राधान्यं निष्प्रामाणिकमेवेति वाच्यम्, आख्यातमाख्यातेने'ति सूत्रे आख्यातपदस्य तिङन्तपरतोक्तेः।

नच 'नामाख्यातोपसर्गनिपाताः प्रकृतयः' इति भाष्योक्त्या 'आख्यातजानि नामानी'ति शाकटायनोक्त्या चाख्यातपदस्य धातुपरत्वमेव युक्तमिति वाच्यम्, भावप्रधानमित्यत्राख्यातपदार्थनिर्णायके यत्र वाक्ये [illegible] तत्र भाव-

प्रधाने भवतः इत्यर्थकं यत्रोभे भावप्रधाने भवतः इति निरुक्ते आख्यातपदस्य तिङन्तार्थकत्वोक्तेः । भावप्रधानमित्यस्य प्रत्ययार्थनिष्ठप्रकारतानिरूपित–भावनिष्ठ विशेष्यताकबोधजनकमित्यर्थः ।

किञ्चाख्याते व्यापारस्याप्राधान्ये–किं करोतीति प्रश्ने पचतीत्युरस्यैव पाचकः इत्युत्तरमपि स्यात्, नच कृञो यत्नार्थकतया यत्न एव किं करोतीति प्रश्नबोधकशब्देन जिज्ञासितः, पचतीत्यत्र लकारस्य यत्नार्थकत्वेन भवति, पचतीत्युत्तरत्वम्, कृत्प्रत्ययस्थले कृञो यत्नार्थकत्वाभावेन पाचकः–इत्यस्य तु नोत्तरत्वमिति वाच्यम् एवमपि पश्य मृगो धावतीत्यत्र भाष्यसिद्धैकवाक्यताभङ्गापत्तेश्च–तथाहि—

अभेदसम्बन्धावच्छिन्न–मृगत्वावच्छिन्न–प्रकारतानिरूपिताश्रयत्वावच्छिन्न-विशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या अनुकूलत्वसम्बन्धावच्छिन्न–धावनत्वावच्छिन्न–प्रकारतानिरूपितव्यापारत्वावच्छिन्नविशेष्यता तादृशविशेष्यत्वावच्छिन्न–कर्मत्वसम्बन्धावच्छिन्न–व्यापारत्वावच्छिन्न–प्रकारतानिरूपितचाक्षुषज्ञानत्वावच्छिन्न–विशेष्यत्वावच्छिन्न–अनुकूलत्वसम्बन्धावच्छिन्न–प्रकारतानिरूपिता या सम्बोध्यत्वावच्छिन्न–अभेदसम्बन्धावच्छिन्न–प्रकारतानिरूपिताश्रयत्वावच्छिन्न–विशेष्यत्वावच्छिन्न-कर्तृत्वसम्बन्धावच्छिन्न–आश्रयत्वावच्छिन्न–प्रकारतानिरूपितविशेष्यत्वावच्छिन्न–व्यापारत्वावच्छिन्न–विशेष्यतातच्छालिशाब्दबोधोदयेनोपपद्यते **मन्मते** 'एकवाक्यत्वम्' ।

**भवताम्मते तु**—धावनक्रियाविशेष्यस्य प्रथमान्तार्थस्य दर्शने कर्मतयाऽन्वये मृगपदाद् द्वितीयापत्तिः । अनन्वये तमिति कर्माध्याहारे च वाक्यभेदो दुर्वार इति ।

नच त्वन्मते वाक्यभेदाभावेऽपि तमिति कर्माध्याहारे गौरवमिति वाच्यम्, धावनक्रियाविशिष्टस्य मृगस्य वाक्यार्थस्य दर्शने कर्मतयानन्वयस्वीकारेणैव गौरववाक्यभेदद्वितीयाप्रसक्तीनामनवकाशसम्भवात् । भवन्मतेऽपि 'पश्य लक्ष्मण पम्पायामि'त्यादौ गत्यन्तराभावाच्च । नच पूर्वदृष्टमृगपुरुषं प्रति केवलधावन–दर्शनतात्पर्येण तादृशवाक्यप्रयोगो नोपपद्येत इति वाच्यम्, शाब्दबोधे धावनानुकूलकृतिमन्मृगस्य दर्शने कर्मत्वेनान्वयेऽपि धावने दर्शनकर्मत्वान्वयपर्यवसानसम्भवात् 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायात् । अत एव 'शिखी ध्वस्त' इत्यादौ ध्वंसस्य शिखायामेवान्वयपर्यवसानमुपपद्यते ।

नतु भवतु व्यापारमुख्यविशेष्यकबोधेऽपि निर्वाहः तथापि मन्मते प्रकृत्यर्थप्रकारकबोधम्प्रति प्रत्ययजन्योपस्थितिः कारणमिति कृदन्तस्थलाभावेनैकः

कार्यकारणभावः। भवतां मते तु कृदन्तादिस्थलानुरोधेनैकः, आख्यातस्थलानुरोधेनैकः–इति कार्यकारणभावद्वयमिति गौरवं दुरुद्धरमिति चेन्न, भवतां मतेऽपि तिङर्थकालस्य व्यापारे एवान्वयात्, तिङर्थकालप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रति धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावो वाच्यः। मन्मते तु तिङर्थसंख्यातिरिक्तप्रकारकशाब्दबुद्धित्वावच्छिन्नम्प्रत्येव धातुजन्योपस्थितिः कारणमिति कार्यकारणभावेनैव निर्वाहः इति गौरवानवकाशादिति दिक्।

---

## (४) अथ लकारार्थो निरूप्यते—

अत्र लट्–लिडित्यादयः दश लकाराः। तत्र लेट्प्रयोगस्तु वेद एव तथाहि—

**'लट् वर्तमाने, लेट् वेदे, भूते लिट् लङ् लुङस्तथा।**
**विध्याशिषोस्तु लिङ्–लोटौ, लुट् लृट्–लृङ् च भविष्यति॥'** इति।

**'वर्तमाने लट्'** इत्यत्र वर्तमानत्वन्तु 'प्रारब्धापरिसमाप्तत्वम्' विनष्टावयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसाऽन्त्यावयवकत्वमित्यर्थः। आत्मा अस्ति, पर्वताः सन्ति, इत्यादौ आत्मधारणानुकूलव्यापारस्य नित्यतया साध्यत्वाऽभावादुक्तवर्त्तमानत्वाभावेऽपि, तत्कालिकराजक्रियाविशिष्टस्य तस्योत्पत्त्यादिमत्तया वर्तमानत्वमुपपादनीयम्। तथा च भाष्यम्—'इह भूतभविष्यद्वर्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्' तच्च वर्तमानत्वादिलट्द्योत्यं वाच्यं वेति पक्षद्वयम्। तत्र धातोर्वाच्यत्वपक्षे धातोः सर्वलकारेष्वविशिष्टत्वेन सर्वत्र वर्तमानकालबोधापत्तिवारणार्थं लडादिकानां द्योतकत्वमङ्गीक्रियते। अपि चान्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव, अन्यथा सर्वप्रतिपत्तौ प्रत्ययानां वाचकत्वविलोपापत्तेः।

यत्तु—'भूत–भविष्यद्भिन्नत्वं वर्तमानत्वं' तन्न मनोरमम्, कालादीनामप्येवं लक्षणे बोधितेऽन्योन्याश्रयत्वात्।

**वस्तुतस्तु**—'प्रयोगविशिष्टकालत्वं वर्तमानत्वम्। वैशिष्ट्यञ्च—स्वोच्चारणाधिकरणत्व–स्वजन्यबोधविषयत्वेन तात्पर्यविषयकक्रियाधिकरणत्व–स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयकक्रियाप्रागभावानधिकरणत्व–स्वजन्यबोधविषयत्वप्रकारकतात्पर्यविषयकक्रियाध्वंसानधिकरणत्वैतच्चतुष्टयसम्बन्धेन। आत्मा अस्ति, पर्वताः सन्ति, इत्यादौ च तत्तत्कालिकानां राज्ञां क्रियामादायवर्त्तमानत्वोपपत्तिरिति दिक्।

**'परोक्षे लिट्'**—अतीतायाः रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितः कालः अद्यतनः, तद्भिन्नकालवृत्तिः परोक्षा या क्रिया तदर्थकाद्धातोर्लिडित्यर्थः। अत्र 'परोक्षत्वञ्च—'साक्षात्करोतीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्वम्'। यद्यपि पिण्डीभूतायाः क्रियायाः अतीन्द्रियत्वेन निदर्शयितुमशक्यं तथाप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात्, अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्याः दर्शनकर्मता भाष्योक्ता असङ्गता स्यात्।

**अन्ये तु**—व्यापारविशिष्टसाधनानां वक्तुः प्रत्यक्षदशायाम् 'अयं पपाच' इति प्रयोगवारणार्थतया सार्थक्ये सत्यव्यावर्तकत्वरूपं दूषणं नास्त्येव, 'व्यातेने किरणावलीमुदयनः' इति लिट् प्रयोगस्य—'मत्तोऽहं किल विललाप' इति वत् व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनन्न युक्तं, बहुतरमनः प्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मकग्रन्थे—अनद्यतनत्वाऽतीतत्वयोर्विस्तारक्रियायामसत्वेन—अनद्यतनत्वाऽतीतत्वयोरभावेन तदर्थकलिडसम्भवादिति दिक्।

**अनद्यतने लुट्**—तच्च 'वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिकत्वम्।

**लृडर्थस्तु**—'लृट्शेषे च' इति सूत्रात् भविष्यत् सामान्यमर्थः। भविष्यत्वं च—वर्तमानप्रागभावप्रतियोगिसमयोत्पत्तिकत्वम्।

**लेडर्थस्तु**—वेद एव 'लिङर्थे लेट्' इति सूत्राल्लिङर्थ इव तस्याप्यर्थः।

**लोडर्थस्तु**—विध्यादयः 'आशिषि लिङ् लोटौ'—'लोट् च'—इति सूत्राभ्यां तथावगमात्।

**लङर्थस्तु**—अनद्यतने लङ्' इति सूत्रात् अनद्यतनभूतः।

**लिङर्थस्तु**—'विधिनिमन्त्रण'—इति सूत्रात् विध्यादयः। तत्र प्रेरणपर्यायो विधिः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्त्तनं, निमन्त्रणं नियोगकरणम्, आमन्त्रणं कामचारानुज्ञा, अधीष्टः सत्कारपूर्वको व्यापारः। तत्र क्रमेणोदाहरणानि—जलमाहार, इह भुञ्जीत भवान्, इहासीत, आरब्धं कुरुत, माणवकमध्यापय इति। तत्र विध्यादिचतुष्टयानुगतप्रवर्त्तनात्वेन वाच्यता लाघवात्।

**प्रवर्त्तनात्वञ्च**—प्रवृत्तिजनकज्ञानविषयत्वम्। तच्चेष्टसाधनत्वस्यास्तीतीष्टसाधनत्वमेव विध्यर्थः। **इष्टत्वञ्च**—समभिव्याहृतपदोपस्थापितकामनाविषयत्वम्। अत एवोक्तं हरिणा 'अस्तिप्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपी'ति शाब्दिकाः।

**तार्किकास्तु**—सुमेरुशृङ्गाहरणनिष्फलकार्याचरणमधुविषसम्पृक्तान्नभोजनेषु प्रवृत्तिवारणाय कृतिसाध्यत्व–इष्टसाधनत्व–बलवदनिष्टाननुबन्धित्व–रूपशक्तित्रयं प्रवर्त्तनात्वं प्रवदन्ति। न च समुदिते एकेनैव शक्त्यादिना निर्वाहे कथं शक्तित्रयमिति वाच्यम्, विशेष्यविशेषणभावे विनिगमकाभावेन त्रिष्वेव पृथग्शक्तेरावश्यकत्वात्।

**नूतनास्तु**—नामार्थधात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्नः इति व्युत्पत्तिबलात् तादृशयागानुकूलकृतिमत्स्वर्ग इत्येव बोधः।

**बलवदनिष्टाननुबन्धित्वं च**—स्वजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्। समुदिते लिङ्शक्तिस्तु न, ब्राह्मणो न हन्तव्यः इत्यत्र ब्राह्मणवधो बलवदनिष्टजनकः इत्येव बोधादित्याहुः, तन्न, कृतिसाध्यत्वस्य यागादौ लोकत एव लाभादित्यनन्यलभ्यत्वात्तस्मादिष्टसाधनत्वमेव प्रवर्त्तना। अत एव मण्डनमिश्रैरुक्तं **पुंसानिष्टाभ्युपायत्वादिति**। अत एवास्तिककामुकस्यागम्यागमनं नरकसाधनमिति ज्ञानदशायामप्युत्कटेच्छया प्रवृत्तिर्भवत्येवेति।

**प्रभाकरास्तु**—प्रवृत्तिम्प्रतीष्टसाधनत्व—कृतिसाध्यत्व–बलवदनिष्टाजनकत्वज्ञानानां त्रयाणां कारणत्वकल्पनापेक्षया लाघवात् कार्यताज्ञानस्यैव लोके कारणत्वमभ्युपगच्छन्ति, तदेव च विध्यर्थः।

**अयम्भावः**—मयेदं कर्त्तुं शक्यते मयेदमवश्यं कार्यमिति द्विविधकार्यताज्ञानं, तत्राद्यं पदार्थयोग्यतागम्यमिति न प्रवृत्तौ कारणम्। द्वितीयन्त्विष्टसाधनत्वादिज्ञानजन्यमिति चिकीर्षाद्वारा प्रवृत्तिम्प्रति हेतुः। अत एवेष्टसाधनत्वेनाज्ञाते मध्वन्नभोजने बलवदनिष्टसाधनत्वेन ज्ञाते विषसंयुक्तान्नभोजने च न प्रवृत्तिः। एवञ्चोपदर्शितकार्यताज्ञानस्येष्टसाधनत्वज्ञानाद्यभावेनाजननात्प्रवृत्तिम्प्रतीष्टसाधनत्वज्ञानानां त्रयाणां कारणत्वकल्पनापेक्षया लाघवेनोक्तकार्यताज्ञानस्यैव चिकीर्षाद्वारा कारणत्वकल्पनमुचितम्। स्वर्गकामो यजेतेत्यादौ वेदे यगादौ कार्यत्वान्वयो न भवितुमर्हति, क्षणिकयागे काम्यस्वर्गसाधनत्वरूपयोग्यताया अभावेन तज्ज्ञानाधीनकार्यताज्ञानवत्वरूपनियोज्यत्वविशिष्टान्वयरूपायाः योग्यतायाः कार्यत्वान्वयप्रयोजिकाया अभावाद्वा कार्यमेव विध्यर्थः। अतोऽपूर्वरूपकार्यमेव विध्यर्थमङ्गीकृत्य स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति प्रथमबोधोत्तरमपूर्वोपस्थितौ तत्र सनियोज्यकं यागविषयं भाविस्वर्गसाधनं कार्यमिति द्वितीयबोधेन भावित्वस्वर्गसाधनत्वयोर्ज्ञाने जाते सति तद्द्वारा यागे स्वर्गसाधनत्वग्रहात्–स्वर्गकामनियोज्यको यागः स्वर्गकामकार्यः इति तृतीयबोधेन तत्र कार्यत्वबोध उपपादनीयः। अत

एवातीन्द्रियस्य तस्य कार्योपपत्तिः। ततः प्रथमप्रतीतकृतेराश्रयान्वयलाभार्थं स्वर्गकामो यागकर्त्तेति चतुर्थो बोधः। स्वर्गकामो यागकर्तृत्वेऽवगते स्वस्मिन्नपि स्वर्गकामत्वात् स्वर्गकार्यत्वमपि यागेऽक्षतमित्यहं स्वर्गकामोऽतो यागो मत्कृतिसाध्यः इति पञ्चमो बोधो जायते।

अत्रेदम्बोध्यम्—प्राथमिकबोध एव शाब्दबोधः द्वितीयादिकस्तु कल्पनिकः लिङः अपूर्वे शक्त्यस्वीकारे तस्य पदादनुपस्थितत्वेन शाब्दबोधे तद्द्वारा स्वर्गसाधनत्वं यागे न भासते, इति तत्र लिङ्शक्तिकल्पनमावश्यकमिति दिक्।

[ हेतुहेतुमतोर्लिङिति सूत्राद्धेतुहेतुमद्भावोऽप्यत्र बोद्धव्यः ]

लुङर्थस्तु—'भूते'-इत्यधिकृत्य लुङिति सूत्रात् भूतसामान्यमर्थः। भूतत्वं च विद्यमानध्वंसप्रतियोगित्वम्। तच्च फलानुकूलायां क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः।

लृङर्थस्तु—'लिङ्निमित्ते' इति सूत्राद् क्रियायाः अनिष्पत्तौ गम्यमानायां भूते भाविनि हेतुहेतुमद्भावे सति लृङर्थ इति दिक्।

इति तरौनीग्रामवासिपण्डितश्रीरामचन्द्रझा व्याकरणाचार्येण विरचितं परिशिष्टं समाप्तम्।



# प्रश्नपत्राणि

## १९५४, प्रथमं पत्रम्

सर्वे प्रश्नाः समानाङ्काः केपि पञ्च समाधेयाः—

१ 'पूर्वत्रासिद्धम्' इतिसूत्रस्याधिकारत्वं समर्थ्य 'अमू' इत्यादिसिद्धयेऽत्र शास्त्रासिद्धत्वस्य कार्यासिद्धत्वस्य वाश्रयणं युक्तमिति सयुक्तिकमुच्यताम् ।

२ 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्यस्यार्थमभिधाय क्वास्य प्रवृत्तिः क्व चाप्रवृत्तिरेति स्फुटीक्रियताम् ।

३ 'न पदान्त' इति सूत्रे विधिशब्दो भावसाधनः कर्मसाधनो वेति सप्रमाणमुल्लिख्य 'महिष्मान्' इत्यत्र जश्त्वं कथन्नेति प्रतिपाद्यताम् ।

४ 'हैहेप्रयोगे हैहयोः' इत्यस्य नियमार्थत्वं विध्यर्थत्वं वेति प्रतिपाद्य 'ईश्चाक्रवर्मणस्य' इत्यस्योभयत्रविभाषात्वं खण्डनीयम् ।

५ 'उदः स्थास्तम्भोः पूर्वस्य' इति सूत्रस्य सार्थकताम् प्रदर्श्य—

'उपधारञ्जनं कुर्यान्नमो रुकरणे सति ।
लोपे प्रकृतिभावे वा नोपधारञ्जनं मतम् ॥'

इति पद्यं पूर्वापरसङ्गतिप्रदर्शनमुखेन व्याख्यायताम् ।

६ 'इदुदुपधस्य चाप्रत्ययस्य' इत्यस्य सोदाहरणमर्थं निर्वर्ण्य 'सुचः' इति सूत्रयितुमुचितम् , 'अधात्वभिहितं समानाधिकरणमसमर्थवत्' इति च वाक्यद्वयं सोपपत्ति विव्रियताम् ।

७ 'आगच्छ हे पयो३द्' 'आगच्छ हे पयो३द' इत्यादौ प्लुतसाधनप्रकारं निर्दिश्य 'ढूलोपे' इत्यत्र कः समास इति सप्रमाणं प्रदर्श्यताम् ।

## १९५४, द्वितीयं पत्रम्

१ परश्चेतिसूत्रस्य प्रयोजनं विशदीकृत्य, प्रकृतित्व–प्रत्ययत्व–परिनिष्ठितत्वानां निर्दुष्टम्परिष्कारं विदधत ।

२ नित्यस्त्रीत्वसत्त्वप्रधानत्वयोः परिष्कारं सपदकृत्यमभिधीयताम् ।

३ दादेर्धातोर्घ इति सूत्रे उपदेश इत्यर्थः केन पदेन लभ्यते ? तस्य फलं न वा ? इति विशदमभिधेयम् ।

४ तद्धितश्चासर्वविभक्तिरिति सूत्रन्निष्फलीकृत्य समर्थ्यताम् ।

५ (क) सरूपसूत्रस्थशेषपदस्य फलमभिधाय, 'णत्वे इति णकारे इत्यें' अस्य ग्रन्थस्याशयं वर्णयत ।

(ख) पद्दन्नेतिसूत्रे प्रभृतिग्रहणम्प्रकारार्थमित्युक्तम् । तत्र केन धर्मेण सादृश्यमित्यभिधीयताम् ॥

## १९५४, तृतीयं पत्रम्

१ मूलकृन्मते निर्दुष्टं प्रातिपदिकार्थत्वं प्रदर्श्य तस्य कुत्रचित्समन्वयश्च ... 'प्रवृत्तिनिमित्तं तदाश्रयश्च प्रातिपदिकार्थ' इति टीकाकृन्मते सपदकृत्यं प्रवृत्तिनिमित्तलक्षणं प्रतिपाद्यताम् ।

अथवा

'कर्त्तुरीप्सिततमं कर्म्म' सूत्रघटकतमप्पदस्यार्थान्वयफलानि प्राङ्नव्यमते अवलम्ब्य निरूप्यताम् ।

२ 'कृति किं तद्धिते माभूत्' इतिपङ्क्तेराशयः शेखररीत्योच्यताम् । १०

३ 'समर्थः पदविधिः' इति सूत्रस्य परिभाषात्वं सयुक्तिकमुपपाद्य निर्दुष्टं पदविधित्वं परिष्क्रियताम् । १०

अथवा

'समासान्ताः' इतिसूत्रे समासपदं तत्सम्बन्ध्यलौकिकविग्रहवाक्यपरम्, तदवयवाश्च समासान्ता इतिसिद्धान्तो युक्त्या व्यवस्थाप्यताम् ।



## १९५५, प्रथमं पत्रम्

१ रप्रत्याहारः कथं खण्डितो नागेशेनेति सयुक्तिकं प्रतिपाद्य सिद्धान्तो व्यवस्थाप्यताम् ।

२ 'अणुदित्सवर्णस्य चाप्रत्ययः' इति सूत्रस्यार्थमभिधाय स्वं रूपमित्यादिशास्त्रस्य प्रत्याख्यानप्रकारं प्रदर्शयत ।

... अचः परस्मिन्पूर्वविधौ' इति सूत्रे पूर्वविधाविति किमर्थकम्, किञ्च तस्य ...लमिति विविच्यताम् ।

...ोपः शाकल्यस्येति सूत्रेऽशिग्रहणानुवृत्तेः फलं प्रदर्श्य उञ ऊँ—इत्यत्र योगभागस्य फलं प्रतिपाद्यताम् ।

...द्वन्द्व्यमनुदेशः समानामिति सूत्रं व्याख्याय 'ऊष्मोदयं प्रथमं स्पर्शमेके ...यमाहुरपदान्तभाजमिति' प्रातिशाख्येऽपदान्तभाजमिति चर्त्वासिद्ध...धार्थानुवादः' इति पङ्क्तेराशयः स्वशब्दैः स्पष्टीक्रियताम् ।

...पः' इति सूत्रस्य प्रयोजनमभिधाय 'अयामन्तात्वाय्येत्न्विष्णुषु' इति ... व्याकरणान्तररीत्यैव, 'सर्वनामस्थानं' मितिमहासंज्ञावत् । अस्याशयः ...र्गापरसङ्ख्या विशदीक्रियताम् ।

७ 'भोभगोअघोअपूर्वस्य योऽशीति' सूत्रे अशग्रहणस्य फलं प्राचीननवीनमतभेदेन ... एतत्तदोःसुलोपोऽकोरनञ्समासे हलीतिसूत्रस्यार्थो निर्दुष्टो निरूप्यताम् । १०

## १९५५, द्वितीयं पत्रम्

...त्या 'सरूप' सूत्रस्य प्रयोजनाऽप्रयोजने पृथग् लक्षयित्वा तत्र-...एवकाराऽपकर्षे फलप्रमाणे सम्यङ् निर्दिशत । १०

अथवा

१ तृतीयाद्यजादिविभक्तौ निर्जरशब्दे जरसादेशप्रवृत्तौ विवदमानयोः प्राचीननवीनयोर्मते सप्रमाणमुपवर्ण्य तयोर्युक्ताऽयुक्तत्वे विवेचनीये ।

२ प्राङ्नव्योभयमतेन अतिखट्वायेत्यत्र याड्वारणप्रकारं दर्शयित्वा सिद्धान्त-पक्षः स्थापनीयः । १०

३ प्रियाष्टन्शब्दस्य—अभिधानानभिधानवादिनोर्मते असङ्कीर्णन्निरूच्य युक्त्या-ऽन्यतरत् स्थापयत । १०

अथवा

'मपर्य्यन्तस्य' इति सूत्रस्य तत्रत्यपरिग्रहणस्य च सार्थक्यं मतद्वयेनो-पन्यस्य प्राङ्नव्योः कस्य रीतिः समीचीनेति सुस्पष्टम्प्रतिपादयत ।

४ मुनित्रयाऽभिमतमेकवाक्यत्वं परिष्कृत्य पदकृत्यं च विलिख्य अन्वादेशे नपुंसक इतिवार्त्तिकस्यान्यथासिद्धिमुपदर्शयत । १०

५ शेखरदिशा अनुपसर्जनाधिकारस्य वैयर्थ्योपदर्शनपुरःसरम्प्रयोजनानि प्रति-पाद्य तथात्वे समापतितम्भाष्यविरोधम्परिहरत । १०

अथवा

'अपरिमाणबिस्त' इति सूत्रे परिमाणपदेन 'परिमाणन्तु सर्वत' इति पारिभाषिकस्य ग्रहणमिति शेखरोक्तिम्पुरस्कृत्य तत्र समायातम्भाष्यत्रिक-विरोधन्निवारयत ।

## १९५५, तृतीयं पत्रम्

१ (क) फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्कर्म्मत्वम् । (ख) गति-बुद्धीति सूत्रं निगमस्य सजातीयापेक्षत्वात्सकर्मकाणाञ्वेदेषामेवेति नियम-परम् । (ग) तन्मध्यपतितन्यायेन तद्धिशिष्टस्य प्रातिपदिकत्वेन तदनवय-वत्वोक्तेरनौचित्येन लुको दुर्वारत्वम् । तिसृषु पङ्क्तिषु द्वे पङ्क्ती ससंदर्भं साधूपपाद्येताम् । ७

२ शत्यः, प्राप्तानन्द इत्युदाहरणे अवलम्ब्य प्राचां मतं कया रीत्या कदर्थितं नागेशेन स्वमतं किं प्रदर्शितं तदुचितं नवेति प्रदर्श्यताम् । ९

अथवा

'दिवस्तदर्थस्ये' तिसूत्रे 'शेष' इत्यस्य सम्बन्धासम्बन्धविषये दीक्षित-नागेशमते सयुक्तिकमुपपाद्य तयोर्युक्तायुक्तत्वे निरूपणीये ।

३ 'यथाऽसादृश्ये' इत्यस्य नियमत्वमुपपाद्य सयुक्तिकं विधित्वं स्थापयत । ९

परीक्षा-प्रश्नो





प्राप्तिस्थानम्—चौखम्बा संस्कृत सीरीज आफिस, वाराणसी—१